# अथ विधिविवेकः

—:0:—

श्रीगणेशाय नमः

साधने पुरुषार्थस्य सङ्गिरन्ते त्रयीविदः ।
बोधं विधौ समायत्तमतः स प्रविविच्यते ॥

# अथ न्यायकणिका

—0:—

श्रीसरस्वत्यै नमः

—:0:—

क्लेशैः कर्मपि न यो जातु भगवान्
भिरपि विपाकैर्न च तयोः ।
थमधिगमयत्योमिति पदं
निरु स्यैव गुरूणामपि गुरुम् ॥१॥
र्शनाद् भिधायिने
। न वार्ता तिसृणामपि ।
इति दृष्टवीयभावेव्यभञ्जनचन्द्रम-
तहेतवे । र्नमो भव बिभ्रते ॥२॥
छाऽर्ग विकोऽपि दमनीं न्यायमञ्जरीं रुचिराम् ।
आह—प्रेति । कुतोऽपि मो गुरवे ॥३॥
रत्यादिसङ्कीर्णशब्दप्रयोगात् ।
राम् ।

१. स्तात् प्रत्याह का० वि० ।
२. यागादिमेवेति २ पु० पा०, का० वि० ।
३. वर्तमानापदेशे तथा नोक्ते इति २ पु० पा० ।
४. स्तव० का० वि० ।
५. तदिदमुच्यते० २ पु० पा० ।

प्रकरणत्रय

न चेयमसिद्धा। प्रयोजनं खल्विह विधेर्वेदप्रामाण्यसिद्धिर्वा, पदार्थसंसर्गप्रतीतिर्वा, हिताऽहितसाधनताऽवगमो वा प्रवृत्तिनिवृत्तिनिमित्तम्। न तावत्प्रामाण्यसिद्धिरन्तरेणाऽपि विधिं तत्सम्भवात्।

पूर्वपक्षः—स्यादेतत्। विधिविरहे कार्यशून्यतया भूताऽर्थाऽवगाहिनो भूतस्य च मानान्तरविषयतया तदपेक्षत्वाद्वेदस्य प्रामाण्यं विहन्येत, पुरुषवाक्यवत्। तदनुपपन्नम्। अत्रेदं तु भवान् पृष्टो व्याचष्टाम् यदेतत्पुरुषवचसां मानान्तराऽपेक्षत्वम्, तत्किं भूतार्थतया, आहोस्वित् पुरुषबुद्धिप्रभवतया? न तावद्भूतार्थतया। प्रत्यक्षादीनामप्रामाण्यप्रसक्तेः। तान्यपि हि भूतार्थान्येव। चैत्यवन्दनादिवाक्यस्य च कार्याऽर्थाऽभिधायिनो निरपेक्षतया प्रामाण्यप्रसङ्गात्। विनियोगमात्रपमेतन्न कार्यपरमिति च स्वतन्त्रसिद्धान्तश्रद्धामात्रविजृम्भितं न प्रामाणिकमिति निवेदयिष्यते। तस्माद्वक्तृधीप्रभवत्वमेव सापेक्षत्वे हेतुः। तच्च भूतार्थेऽपि वैदिके नास्तीति नास्ति सापेक्षता। सा च कार्यनिष्ठानामपि पुरुषवचसाम्। तन्न प्रामाण्यसिद्ध्यर्थो विधेः।

नाऽपि पदार्थसंसर्गप्रतीतिः। नाऽपि [illegible]
चैत्र इति पदार्थसंसर्गप्रतीतेरुपपत्तेः। यदि [illegible]
वचनानि, विवक्षा च मानान्तराऽवधार[illegible]
गोचरं न पदार्थमात्रगोचरमिति [illegible]
पदार्थसंसर्गमेव गोचरयन्ति। न [illegible]
सिद्ध्यर्थं विधिरेषितव्य इति। [illegible]
विधौ सति तद्विधिकाङ्क्षानिबन्ध[illegible]
काङ्क्षैव कुतः तदपर्यवसानादि[illegible]
यथा हि शब्दाऽभिहितो विधि[illegible]
तथा क्रियादयोऽपि पदार्थाः [illegible]
ङ्क्षायोग्यतासन्नि[illegible]
विशिष्टाऽर्थप्र[illegible]
लोकतद्व[illegible]

विधिरिति सिद्धा व्यापकविरुद्धोपलब्धिः[1], अतो नाऽऽरम्भणीयमेतत्प्रकरणमिति। तान् प्रत्याह—साधने पुरुषार्थस्य सङ्गिरन्ते त्रयीविदः। बोधं विधौ समायत्तमिति। मा भूवन्नन्यानि प्रयोजनानि विधेः। पुरुषार्थसाधनताऽवबोधस्तु विधिनिबन्धनः। न हि "स्वर्गकामो यजेते"-ति विधौ असति स्वर्गो भावनाया भाव्यः सम्भवति। सा हि भाव्यमात्राऽपेक्षिणी। भविता च भाव्यो यागादयश्च भवितार इति समानपदोपादानतया प्रकृत्यर्थतया च तदनुरक्ताया एव भावनायाः प्रतीतेः स्वर्गस्य च पदान्तरोपादानतया पुरुषविशेषणतया च व्यवस्थानात्तमपहाय यागादीनेव[2] भाव्यतया भावना गृह्णीयात्। कर्त्रपेक्षितोपायतारूपविध्युपहितमर्यादा पुनरियं भावना समानपदोपादानमपि प्रथमाऽवगतमपि दुःखाकरतया कर्त्रनपेक्षितमपहाय धात्वर्थमसमानपदोपादानमपि पुरुषविशेषणमप्यपेक्षिततया स्वर्गमेव भाव्यमवलम्बते। समासादितथाविधभाव्या च यागादीन् करणतया [illegible] इति पुरुषार्थसाधनता तेषां सिद्धा भवति। कथं तर्हि वर्तमानाऽप[illegible] [illegible]साधनताऽवगतिः? प्रमाणान्तरवशान्न शब्दसामर्थ्यात्।

सा[illegible]त्तिका[illegible]रकर्मस्विति चाऽसाधकं तु तादर्थ्यादिति च [illegible]तस्याऽपि [illegible]वाऽऽचार्यः।

[illegible]के म[illegible]न्त्रस्य प्रवृ[illegible]द्धो वा स्यादप्रसिद्धो वा ? स चेत्प्रसिद्धो, [illegible]लपवर्तेः। शब्दप्रतिपन्नस्याऽप्रतिपित्सितत्वात्। [illegible]षयितु[illegible]णिस्थो[illegible]ऽनुपपत्तेः। अप्रसिद्धश्चेन्नितरां वेदार्थनिरू[illegible]स्यैव तत्र यं प्रकरणमिति। अत आह—अतः स [illegible]र्शनात्[illegible]योऽपि विधिर्विप्रतिपत्तेः साधकबाधक[illegible]। न वात सन्[4] प्रतिपित्सित उपपत्त्यनुपपत्तिभ्यां इति [illegible]दृष्टद्वितीयभा[illegible]व्यवच्छेदेन यथावत्प्रतिपाद्यते। तदुच्यते[5]—

[illegible]त्तहेतुः।

[illegible]छाऽपि[illegible]विवेकोऽपि वार्तिककृत्प्रभृतिभिरकारीति सोऽपि व्यर्थ आह—प्रेति। कृतोऽपि तैर्विवेकोऽकृतकल्प एव। 'अभिधाभावना-रित्यादिसङ्कीर्णशब्दप्रयोगात्। इह तु कर्तुरिष्टाऽभ्युपाय इति

१. स्तान् प्रत्याह का० वि०।
२. यागादिमेवेति २ पु० पा०, का० वि०।
३. वर्तमानापदेशे तथा नोके इति २ पु० पा०।
४. सन्न० का० वि०।
५. तदिदमुच्यते० २ पु० पा०।
६. अभिधां भावनाम्० २ पु० पा०।

स खलु शब्दभेदो वा, तद्व्यापाराऽतिशयो वाऽर्थभेदो
भिधानाच्छब्दोऽपि तथा व्यपदेश्यः ।

प्रमाणत्वादनियमात्प्रवृत्तेः संविदाश्रयात् ।
समभिव्याहृतेः शब्दो न विधिः कार्यकल्पनात् ॥

प्रमाणं हि शब्दः प्रतिज्ञायते । बोधकं च प्रमाणम् । तत्र प्रवृत्ति
कञ्चनाऽर्थातिशयमवगमयन् शब्दश्चोदनात्वेन प्रमाणतामश्नुते । लिङ
तु प्रवृत्तेः कारकस्तां प्रमाणतामपजह्यात् । न हि कारको हेतुः संविदो
अपि तु ज्ञापकः ।

निष्कृष्याऽभिधानात् तस्य च व्युत्पादनात्प्रकर्षोपपत्तेरर्थवदेतत्प्रकर
तत्र प्रथमं तावद्विप्रतिपत्तिनिमित्तं विमर्शमाह—स खलु शब्दः
लिङादिः शब्दान्तराद्भिद्यते इति भेदः । तस्य खलु लिङादे
मणेरिव वस्तुस्वभावजोऽतिशयो येन लोहमिव चेतनं प्र
तद्व्यापाराऽतिशयो वा, प्रवृत्तिहेतुरुपेयते, अर्थभेदो वा, वक्ष्य
यद्यर्थभेदः, कथं तर्हि चोदनेति क्रियायाः प्रवर्तकं
वाक्यत्वादिति चेत्यत आह—यदभिधानाच्छब्दोऽपि

तत्र शब्दस्वरूपस्य तावद्विधिभावं

प्रामाणत्वादनियमात् प्रवृत्तेः सं
समभिव्याहृतेः शब्दो न विधिः

कारिकां व्याचष्टे—प्रमाणं हि
धर्म इति । बोधकं च प्रमाणम् । अबाधित
तत्र च प्रवृत्तिहेतुं कञ्चनाऽर्थातिशयमवगम
मश्नुते शब्दस्वरूपविधिवादिनां मते । स्वयम
प्रमाणतामपजह्यात् । नन्वप्रमाया[3] अपि प्रवृत्तेः
आह—न हि कारको हेतुः प्रमाणम् । मा भूद् बीजादीना
प्रामाण्यम् । किं तर्हि प्रमाणकमित्यत आह—अपि तु ज्ञापकः ।
तथाभावात्[4] ।

ननु मा नामवादीत्प्रवृत्तिहेतुं कञ्चनाऽर्थातिशयम्, अथ
स्वयमेव प्रवृत्तिहेतुः । तथापि यत्र प्रवृत्तिरनेन जनयितव्या तद्विषय

१. इति सिद्धम्० २ पु० पा० ।
२. प्रभेदः २ पु० पा० ।
३. नन्वयमप्रमायाः २ पु० प
४. तथा भावात् प्रवृत्तिहेतुभूतमर्थं प्रमापयत एव प्रामाण्यात् २ पु
५. स विषयः २ पु० पा० ।

विषयाऽवबोधनान्न दोष इति चेत् ? न। तन्मात्रस्याऽन्यत्राऽपि
त्। चोदनालक्षणोऽर्थो धर्म इत्यभ्युपगमाऽनर्थक्यात्। शब्दस्वा-
व नियोगतोऽवश्यं प्रवृत्तिः स्यात्। तथा चाऽकुर्वन् विहितं कर्मेति
यं स्यात्। न हि तदानीं बलवदनिलसलिलौघनुद्यमानस्येवेच्छाऽपि
त्रप्रवृत्ति प्रति पुरुषस्य। ज्ञापकश्च स्वरूपकर्मसम्बन्धविषयज्ञानम-
। लिङादिस्वरूपं च प्रवृत्तेः कारकमित्यनुपयुक्तस्वरूपतत्कर्मसम्बन्ध-
संविदोऽपि पुंसः प्रवृत्तिप्रसङ्गः।

रो बोध्यते[1] इति कारकहेतोरपि विषये प्रमाजनकत्वात्प्रमाणतोप-
ते। अङ्कुरस्येव पचादिहेतोः स्वाकारणं प्रमापयत इति शङ्कते—
ऽवबोधनान्न दोष इति चेत् ?। निराकरोति—नेति। कुतः ? तन्मा-
ऽन्यत्रापि[2] वर्तमानापदेशेऽपि चैत्रः पचतीत्यादौ तुल्यत्वात्। न हि
भावना यत्र नाऽवगम्यते। अस्तु तुल्यता, का नो हानिरित्यत आह—
[illegible]ऽर्थो धर्म इत्यभ्युपगमाऽऽनर्थक्यात्। प्रवर्तकत्वं चोदनात्वं
[illegible]तिशयमवगमयन्ननेन रूपेण प्रामाण्यमश्नुते, न भावना-
सा[illegible]त्तिक[illegible]ऽपि तुल्यत्वात्। तस्माद्येन रूपेण प्रामाण्यं
[illegible]तस्याऽपि [illegible] तेन प्रामाण्यम्, तस्य प्रवृत्ति प्रति कारकत्वा-
[illegible]न्त्रस्य प्रव[illegible] व्याख्याय अनियमात् प्रवृत्तेरिति व्याचष्टे,
[illegible]लपवनै[illegible]गतोऽवश्यं प्रवृत्तिः स्यात्। भवतु, को
षयितु[illegible]णिस्थो[illegible]ऽकुर्वन् विहितं कर्मेति धर्मसूत्रकारवचनं
निरू[illegible]स्येव तत्र
[illegible]र्शनात्
[illegible]। न वात्पुंसां तस्याश्च कादाचित्कत्वात् न विहिते-
इति[illegible] दृष्टवैयर्थ्यभीतेरिति सम्भवति विहिताकरणेन[3] निर्विषयता
[illegible]त्तहेतम्। आह—न हि तदानीं बलवदनिलसलिलौघनुद्य-
[illegible]छाऽपि तन्त्रं प्रवृत्ति प्रति पुरुषस्य। संविदाश्रयादिति व्याचष्टे—
च स्वरूपतत्कर्मसम्बन्धविषयज्ञानमपेक्षते, न तु कारकः[4]। लिङादि-
च प्रवृत्तेः कारकमित्यनुपयुक्तस्वरूपतत्कर्मसम्बन्धविषयसंविदोऽपि
अप्रवृत्तिप्रसङ्गः। एतदुक्तं भवति, स्वकार्ये संविदाश्रयत्वं ज्ञापकत्वेन

१. व्यापारः शब्दस्तद्बोधने इति २ पु० पा०।
२. तस्याऽन्यत्रापि २ पु० पा०। का० वि०।
३. विहिताऽकरणमिति २ पु० पा०।
४. कारकं का० वि०।

ननु शङ्खध्वनिवदेतत् स्यात्? यथा हि शङ्खशब्दात् तव्यमित्युपयुक्तस्वरूपसम्बन्धसंविद एव प्रवर्तन्ते, नेतरे। न च शङ्ख प्रवृत्तेरभिधायकोऽन्यस्य वा कस्य चित्प्रवृत्तिहेतोः, येन ज्ञापकः वार्तमेतत्। न हि शङ्खध्वनिः प्रवृत्त्युपयुक्तसङ्गतितया प्रवृत्ति शङ्खशब्दात् प्रवर्तितव्यमिति, अपि तु प्रवर्तितव्यमिति प्रकृत्य रिक्ते प्रत्ययार्थे च विधेयस्य पुंसोऽभिप्रायभेदे कृतसङ्केतस्तमनुस्मा

व्याप्तम्, धूमादौ तथा दर्शनाद् बीजादौ चाऽनुपलब्धेः। तदिह तद्वि कत्वोपलब्धिरूपाऽनुपलब्धिरेव[1] संविदाश्रयत्वं निवर्तयेदिति।

चोदयति ननु शङ्खध्वनिवदेतत् स्यात्?। तदेव स्फुटयति— शङ्खशब्दात् प्रवर्तितव्यमिति प्रवृत्त्युपयुक्त[2]स्वरूपसम्बन्धसंविद एव नेतरे। न चाऽस्य तत्र ज्ञापकत्वम्, अनभिधानात्। अपि तु[3] क मेवेत्याह—न च शङ्खशब्दः प्रवृत्तेरभिधायकोऽन्यस्य वा कस्य हेतोः, येन ज्ञापकः स्यात्। अनभिधायकोऽपि शङ्ख ऽपि तु प्रवृत्तिहेतुमभिप्रायविशेषमनुविधेयस्याऽनु व्यभिचार इति। परिहरति—वार्तमेतत्। न सङ्गतितया प्रवृत्तेः कारणम्। कुतः? श स्वकार्य[4]प्रवृत्तिं प्रति कारणत्वमस्याऽ ततश्चाऽनेन प्रकारेण विदितस्वकार्य ऽनुमानसिद्धात् प्रवृत्तिप्रसङ्गात्[5]। क अपि तु प्रवर्तितव्यमिति प्रकृत्यर्थाऽतिरिक्ते भेदे[7] आज्ञादौ कृतसम्बन्धः कृतसङ्केतस्तमनुस् मुपलक्षणीकृत्याऽनुमातुमुद्दिश्येति[8] यावत्। स्मा कृतसम्बन्धस्मरणसहकारिणः शङ्खध्वनेरेवाऽभिप्रायविशेषाऽनुम..

क्वचित्पाठः। कृतं सम्बन्धमनुस्मारयति तावत्। अथ सहकारी सन्नभिप्रायभेदमनुमापयतीति द्रष्टव्यम्। एतेन शङ्खध्व त्वाद् व्यभिचार इति दर्शितम्। भवत्वेवं, प्रवृत्तिस्तु कुत इत्यत ततोऽभिप्रायभेदादनुमितात्तदनुविधायिनः प्रवर्तन्ते।

---

१. कारकोपलब्धिरेव २ पु० पा०। २. इत्ययुक्त १ पु० पा

३. च० का० वि०। ४. स्वकार्यम् ३ पु०,

५. ध्वनेरेवप्रवृत्ति पु० पा०। ६. तर्हि ततः का० वि

७. अनुविधेयस्य पुंसोऽभिप्राय २ पु० पा०। ८. न का० वि०।

त्तदनुविधायिनः प्रवर्तन्ते। अविदितविषयतया नाऽनधिगतसमयाः ...न्ते इत्यपि मिथ्या। तन्मात्रसङ्गतिज्ञस्याऽपि तत्प्रसङ्गात्। अप्रत्यय- ...यां च शब्दपरतन्त्रस्य प्रवृत्तौ विषयवेदनाऽनुपयोगात्। प्रबलपवने- ...रितस्येवाऽन्धपङ्ग्वादेर्न वेदनं प्रवृत्त्यङ्गम्। कारको अपि प्राणिस्थो- ...त्यहिदंशो ज्ञानमपेक्षते। नैवम्। ज्ञानस्यैव तत्र कारकत्वात्। विनाऽप्यहिदंशं ...शङ्काविषेणाऽपि मरणदर्शनात्।

योऽप्याह—अभिधेयविज्ञानं प्रति कारकहेतुरपि शब्दो यथा ...ज्ञानमपेक्षते तथा प्रवृत्तिशक्तिसंविदमपीति। तेनाऽपि न ज्ञापकादन्यत्र ...नाऽपेक्षा प्रदर्श्यते। ज्ञानकारकस्यैव ज्ञापक इत्याख्यानात्।

ननु भवतु प्रवृत्तेः कारको यत्र त्वनेन प्रवर्तयितव्यः पुरुषः स ...षयोऽज्ञातो न[1] प्रवृत्तिविषयो भवतीति तत्र लिङादिर्ज्ञापको ऽभ्युपगन्तव्यः। ...ा चाऽस्य संविदाश्रयत्वमुपपन्नम्। प्रवृत्तिकारकस्याऽपि प्रवृत्तिविषये ...स्यादित्यत आह—अविदितविषयतया नाऽनधिगतसमयाः पुमांसो ...सोऽ[illegible]त्तिकारकेभ्योऽपि प्रवर्तन्ते इत्यपि मिथ्या। कुतः? [illegible]स्याऽपि तत्प्रवृत्तिप्रसङ्गात्। दूषणान्तरमाह—अप्रत्य- [illegible]के म[illegible]न्त्रस्य प्रवृतौ विषयवेदनाऽनुपयोगात्। कस्मादुपयोगो [illegible]लपवनेरितस्येव नाऽन्धपङ्ग्वादेर्वेदनं प्रवृत्त्यङ्गम्। ...षयितु[illegible]णिस्थो[2]ऽहिदंशो ज्ञानमपेक्षते इति व्यभिचारः। निरू[illegible]स्यैव तत्र कारणत्वात्[3]। कुतः? विनाऽप्यहिदंशं [illegible]र्शनात्। दंशस्यैव मरणकारणत्वेऽसति तस्मिन् [illegible]। न जातु बीजविज्ञानमङ्कुरमसति बीजे जनयति। इति[illegible]दृष्टविषयभावनाप्रबोधादहिदंशविज्ञाने सति भयसम्भवान्म- ...त्तहेतुम्।

योऽप्याह—अभिधेयविशेषविज्ञानं प्रति कारकहेतुरपि शब्दो यथा ...नमपेक्षते तथा प्रवृत्तिशक्तिसंविदमपीति। तेनाऽपि न ज्ञापका- ...ज्ञानाऽपेक्षिता प्रदर्श्यते। ज्ञानकारकस्यैव ज्ञापक इति आख्याना- ...सपक्षेण व्यभिचार इति भावः। सर्वस्यैव ज्ञापकस्य कार्यजनकता- ...तच्छक्तिसंविदाश्रयभावितोक्ते[5]ति मत्वा भ्रान्तश्चोदयति। ननु

---

१. पुरुषो योऽज्ञान २ पु० पा०। २. प्रायेण हि।
३. कारकत्वात् २ पु० पा०। ४. विशेषेण १ पु० पा०।
५. भावेनोक्तेति २ पु० पा०।

ननु ज्ञानकारकोऽपि चक्षुरादिर्न शक्तिज्ञानमपेक्षते । कि
शब्दस्याऽकारकत्वप्रसंगः[1] । अयमपरो दोषः । कुतस्तर्ह्यर्थबोधः ?
अभ्यासात् कशाऽङ्कुशवत् । उक्तञ्च—

अभ्यासात्प्रतिभाहेतुः सर्वः शब्दः समासतः ।
बालानां च तिरश्चां च यथाऽर्थप्रतिपादने ॥

ज्ञानकारकोऽपि चक्षुरादिर्न शक्तिज्ञानमपेक्षते । समाधातुं नि
सन्निधिराह—किमतः ? आन्तरे पार्श्वस्थः प्रसङ्गमापादयति—ज्ञानं
शब्दस्याऽकारकत्वप्रसङ्गः । ज्ञानकारकचक्षुरादिवैधर्म्यात् । अत्रा
तया पार्श्वस्थं प्रति तावदुत्तरमाह–अयमपरो दोषः । न वयं मीम
येन शब्दार्थयोः स्वाभाविकं सम्बन्धमाचक्ष्महे इति भावः । ननु यद
शब्दः, कुतस्तर्ह्यर्थबोधः ? न च नास्तीति वक्तव्यं, वचनेन
ऽस्मत्प्रतिपादनायाऽप्रवृत्तिप्रसङ्गादिति भावः । उत्तरम्—अ
कशाङ्कुशाऽभिघातवत्[4] । नाऽभिधानाऽधीनोऽर्थबोधः शब्दादर्थं
भ्यासाऽधीनः । यथा हि खलु कशाऽङ्कुशाऽभिघातादयोऽनभिधाय
वाजिगजादीनामभ्यासात् स्वतः[6] प्रवृत्तिनिवृत्तिहेतुमर्थप्रति
भावयन्तः प्रवर्तका[7] निवर्तकाश्च तथा संक्षेपतः सर्वः श
मव्युत्पन्नानां चेह जनयतीत्यर्थः । उक्तञ्च—

अभ्यासात्प्रतिभाहेतुः सर्वः शब्दः समासतः ।
[9]व्युत्पन्नानां [10]पुनरर्थाभिधानतः । अ

भ्यासशब्देनाह । कार्ये कारणोपचारात् । अयं
सोऽवश्याऽभ्युपेय इत्यत्र दृष्टान्तमाह—

बालानां[11] च तिरश्चां च यथाऽर्थप्रतिपादने ।

न हि तेषां प्राग्भवीयभावनामन्तरेण प्रवृत्तिनिवृ
भास[12]प्रतिभोत्पादनसम्भवः[13] । अर्थाऽऽभासप्रतिभोत्पादनेन चा
पादनमुक्तम् । एतच्च सिद्धान्ते विस्तरेण वक्ष्यते ।

---

१. प्रसङ्गादिति मू० पु० पा० ।
२. ज्ञानं प्रति, नास्ति २ पु
३. ता का० वि० ।
४. धान
५. चा का० वि० ।
६. स्वतो न २ पु० पा० ।
७. काः का० वि० ।
८. सर्वे एव शब्दाः २ पु०
९. अव्युत्पन्नव्यु का० वि० ।
१०. न पुनरभिधानतः २ पु
११. अभ्यासादिश्लोकोत्तरार्द्धमिदं पादद्वयमिति प्रतिभाति ।
१२. सः का० वि० ।
१३. नमेव चार्थप्रतिपादन का

अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते । इति ।

न च ब्रूमः सर्वो ज्ञापको ज्ञानाऽपेक्षः, किन्तु स एव, नेतरः । ादिष्वदर्शनात् ।

न च दृष्टविपरीतस्वभावकल्पना लिङ्गादीनाम् अनुपपत्त्या । शाऽनुसारेणाऽप्युपपत्तेः । प्रत्ययश्च सहाऽभिधानात्प्रकृत्या, तदनुवादाद्वा,

अनागमश्च सोऽभ्यासः

आगम्यते प्राप्यतेऽस्मादिति कारणमागमः । अविद्यमान आगमो यस्यासावनागमोऽनादिरित्यर्थः ।

समयः कैश्चिदिष्यते ।

समय इत्यादिमत्तामाह[1] । नैयायिकादयो हीश्वरनिर्माणं शब्दार्थ-सम्बन्धं[2] समय इत्याचक्षते । स चाऽभ्यासस्य भावनाया विषय इत्यभ्यास [illegible] पार्श्वस्थं निराकृत्य प्रकृतं चोदकं प्रत्युत्तरमाह—न च ब्रूमः, सर्वो [illegible]नाऽपेक्षः[4] किन्तु स एव ज्ञापक एव, नेतरः कारकः । [illegible]ङ्कुरादिकारकेष्वदर्शनात् ज्ञानाऽपेक्षाऽवधार्यते स तु [illegible]ऽभिसन्धिरुद्घाटितः ।

[illegible]षयितुं [illegible]ऽपि केचिदनाश्रितसंविदो ज्ञानं जनयन्ति, यथा निरू[illegible] [illegible]श्रितसंविदः[6], यथा धूमादयो धूमध्वजादिविज्ञानम् । [illegible]तवः स्वकार्यजननं प्रत्यनाश्रितसंविदस्तथाऽपि [illegible] संविदमाश्रयिष्यते[7] अन्यथा प्रवृत्त्यनुपपत्तिरित्यत इति [illegible] दृष्टविपरीतस्वभावकल्पना लिङ्गादीनामन्यथाऽनुपपत्त्या । [illegible]त्तहेतुभूताऽर्थज्ञापकतया दृष्टाऽनुसारेणाऽप्युपपत्तेः[8] । प्रकृति-सहाऽभिधानम् । तथा च प्रत्ययश्च सहाऽभिधानात्प्रकृत्या सह [illegible]हारमर्हति नाऽन्यथा । सहाऽभिधानप्रकारं दर्शयति—तदनुवादाद्वा

---

[1] [illegible]माह का० वि० । [2]. सिद्धार्थसम्बन्धम् २ पु० पा० ।

[3] [illegible] का० वि० । [4]. क्षी का० वि० ।

[5] [illegible]नापेक्षायाः । ज्ञानाऽपेक्षावधार्यते न तु ज्ञानापेक्षेष्वेव ज्ञापकत्वम् २ पु०पा० ।

[6] [illegible] का० वि० । [7]. आश्रयति २ पु० पा० ।

[8] [illegible]रर्थापत्तिपरिक्षयात् । समभिव्याहृतेरिति हेतुं विवृणोति । प्रत्ययमात्रात् [illegible]कृतिमात्राच्चार्थप्रतीतेरनुपपत्तेः का० वि० ।

तद्द्योतनाद्वा, तत्सम्बन्ध्यर्थान्तराऽभिधानाद्वा तया समभिव्याहा
ऽवाचकस्य तु प्रवृत्तेः कारकस्य स न युक्तः । संख्याद्यभिधेयान्तर
स इति चेत् ?

अस्तु । प्रवृत्तेस्तु प्रत्ययेनाऽप्रतिपाद्यमानायाः कथं प्रवृत्त्यभिस
अभिधयैव प्रत्ययस्य प्रकृत्यर्थाऽनुरक्ता प्रवृत्तिरिति चेत् ? न ताऽनुपप
कार्यरूपा लिङाद्यभिधेयेति शब्दविधिवादिभिः शक्यं वक्तुम् । तत्स्वरू
तादृशलिङादेः कारकत्वेन सङ्गतिः । समभिव्याहृतिस्तु तस्या

प्रकृत्यर्थाऽनुवादात् । यथैको द्वौ बहवः इति । तद्द्योतनाद्वा प्रकृत्यर्थद्य
यथा कुमारीति ईप्रत्ययः[1] स्त्रीत्वं द्योतयति । तत्सम्बन्ध्यर्थान्तराभि
यथा पचति पाचको दण्डीति तिवके[2] नयः प्रकृत्यर्थविशि
कर्तृसम्बन्धार्थाः । अस्तु, प्रस्तुते किमायातमित्यत आह—अवा
लिङादेः प्रवृत्तेः कारकस्य न समभिव्याहारो युक्तः । सहा
ऽसम्भवात् । शङ्कते--अभिधेयान्तरनिबन्धनः स इति चेत्? ।
वयमनभिधेयतां[3] सर्वथैव लिङादीनां ब्रूमः, येन सहा
सम्भवात् प्रकृत्या[4] समभिव्याहृतिर्न स्यात् । किन्
हि तस्याऽभिधेयाः । ते च कथञ्चित्कृत्या
समभिव्याहारोपपत्तिरित्यर्थः । निराकरोति—अस्तु
विशेषस्तु न सिध्यतीत्याह--प्रवृत्तेस्तु प्रत्ययेनाऽप्र
कथं प्रकृत्यर्थसम्बन्धः ? न खलु समभिव्याहार
सहाऽवगम्यते, अपि तु कर्तव्यतापहितसीमानं
विशिष्टामभिदधताम् । न च कर्तृसंख्याद्यभिधाने सत्य
मर्हतीत्यर्थः[6] । शङ्कते—अभिधेयैव प्रत्ययस्य प्रकृत्यर्थाऽनुरक्ता
तेन समभिव्याहारविशेष[7] उपपन्न इति चेत् ? निराकरोति—न
कार्यरूपा लिङाद्यभिधेयेति शब्दस्वरूपविधिवादिभिः शक्यं
कर्तव्यता[8]ऽऽकाराया एव भावनायाः प्रवृत्तिहेतुतया विधित्वेन श ।
तत्त्वाऽनुपपत्तेः । तस्मात्प्रवृत्तिमात्रं लिङाद्यर्थो न पुनः कर्तव्य
तैरभ्युपगन्तव्यम् । तथा च तस्यां तर्हि प्रवृत्तौ तादृश्यां कर्तव्यता ।
लिङादेः कारकत्वेन सङ्गतिर्न पुनरभिधायकत्वेनेति प्रकृत्यर्थाऽ

---

१. ङीप् प्रत्ययः २ पु० पा० । २. तिङके नयः २ पु
३. धायकतां का० वि० । ४. प्रकृत्या सह २ पु०
५. त्ययं का० वि० । ६. विशेषः सिध्यति २
७. व्यवहारप्रवृत्तिरिति विशेषः २ पु०पा० । ८. कार्यता २ पु०

तथाविधेन सम्बन्धमुपाश्नुते । अप्रतीतयोर्घटनाऽयोगात् । कार्यायां तौ न नियमनिमित्तं समस्ति अनभिधेयस्य प्रवृत्तिहेतोः । अपि फलेषु फलाऽध्याहारः, क्वचित् क्रतूपकारकल्पना, श्रुतानामपि नां फलत्वाऽध्यवसाय इति सर्व एष[1] महिमा विधेः । स शब्दस्य न ताऽनुपपन्नः । न हि तदा शब्दादनवगम्यमानमन्यथा गम्यते । न हि तस्वरूपस्यैवाऽन्यथाऽनुपपत्तिः । प्रवर्तकस्येति चेत् ? न । तस्याऽपि तस्यावर्तिन इवोपपत्तेः फलरूपं कारकं विना । तस्मान्न विधिः शब्द-पारो वा ।

त्यभिधायकत्वेन रूपेण । विशिष्टसमभिव्याहृतिस्तु कुतः[2] सा हेतुकेत्यत आह—वाच्यं लक्ष्यं वा तथाविधेन वाच्येन लक्ष्येण वा मुपाश्नुते । शब्दादप्रतीतयोर्घटनाऽयोगात् । शाब्दे प्रमेये प्रवृत्तिमा-भिधेयत्वात् । कार्यायां तु कर्तव्यताऽऽकारायां प्रवृत्तावनभिधेयायां यमनिमित्तं विशिष्टसमभिव्याहारनिमित्तं समस्ति अनभिधेयस्याऽ-नविशिष्टाऽभिधेयस्य शब्दस्वरूपविधिवादिनो[3] मते प्रवृत्तिहेतो-सार्थकल्पनादिति विवृणोति—

...श्रुतफलेषु पिण्डपितृयज्ञादिषु स्वर्गादिफलाऽध्याहारः । ...के म... ...कल्पना समिधादौ । श्रुतानामपि पुरुषविशेषणतया ...दूषयितुं... ...वसाय इति सर्व एष महिमा विधेः । स शब्दस्य निरु... ...। कस्मात् ? न हि तदा शब्दादनवकल्प्यमान-... ...वस्था[4] किञ्चिद्गम्यते । यच्छब्दा[5]दवगतं फलादिना ...यन्निह... ...शोदीनां कल्पनाबीजं भवेत् । मा भूद् लिङादिगम्यस्या-... । लिङादिरेव सेति[6] चेत्तत्राह—न हि लिङादेः स्वरूपस्यैवाऽ-... इति... ...र्तेः । न हि तद्रूपस्य श्रोत्रग्राह्यस्य सान्निध्ये फलादि वर्तते, येन शक्यं नोपपद्यते । शङ्कते—प्रवर्तकस्येति चेत् ? लिङादयः खलु पुंसां ...। न चैते निष्फले प्रवर्तयितुं पुरुषमीशते इति तदन्यथाऽनुपपत्त्या ...कर्तव्येत्यर्थः । निराकरोति—न । तस्याऽपि प्रवर्तकत्वस्य पवनादिवर्तिन ...। न हि यो यः प्रवर्तयति स सर्वः फलमपेक्षते । पवनादीनां ...मपि तदनपेक्षत्वदर्शनादित्यर्थः । कारिकार्थमुपसंहरति—तस्माद्धेतु-...म विधिः शब्दः । तद्व्यापारो वा न विधिः । अत एव हेतुपञ्च-

---

१. एव० मू० पु. २. तस्त्या का० वि० ।
३. नां का० वि० । ४. क्रतूपकारकत्वेन विना २ पु० पा० ।
५. दवगते का० वि । ६. लिङादेरेव भवेदिति चेत् २ पु० पा० ।

नन्वनभिधेये एते दोषाः, अभिधेय एव तु लिङादिशब्दा
प्रति प्रयोजकव्यापार आत्मीयः प्रवर्तना। एवं ह्युक्तम्। 'अभिधा
माहुरन्यामेव लिङादयः'। तथा च ज्ञापकत्वात्प्रामाण्यम्। प्र
बुद्ध्वा पुरुषस्येच्छया प्रवृत्तिः संबन्धबोधाऽपेक्षा च अभिधेय
नियमश्च। अभिधेयत्वात्। प्रतीतप्रवर्तनाऽन्यथाऽनुपपत्त्या कार्यकल्

नैतत्सारम्।

न प्रयोगाऽनिरूप्यत्वाद्वैयर्थ्यात्पूर्वदोषतः।

अप्रवृत्तेः फलाऽयोगाद्रूपोक्तेर्व्यापृतिः श्रुतेः॥

विधिरित्यनुषज्यते। न हि प्रेरणाऽध्येषणाऽभ्यनुज्ञालक्षणः

काश्चोदयति—नन्वनभिधेयशब्दव्यापारे एते दोषाः पूर्वोक्ताः। एव तु लिङादिशब्दानां पुरुषं प्रवर्तमानं प्रयोज्यं प्रति प्रयोज आत्मीयः प्रवर्तना। न चैतत्स्वोत्प्रेक्षितमित्याह—एवं ह्युक्तम्—

'अभिधाभावनामाहुरन्यामेव लिङादयः'। इति।

अभिधायाः शब्दस्य भावनां प्रवर्तनामाहुरित्यर्थः। ... णत्वेना[1]ऽप्रामाण्यमासञ्जितं तत्स्वकार्यप्रवर्तनाज्ञापकत्वेन, त्याह—तथा च ज्ञापकत्वात् प्रामाण्यम्। इच्छासहकारि इच्छायाश्चाऽवश्यम्भावा[2]ऽनियमात्। प्रवृत्तिनियम प्रवृत्तिहेतुं बुद्ध्वा पुरुषस्येच्छया प्रवृत्तिः। ज्ञापकत्वे पपन्नमित्याह—सम्बन्धबोधाऽपेक्षा च। प्रकृत्य धायिना च प्रत्ययेन सह प्रकृतेः समभिव्याहारवि अभिधेयसम्बन्धनियमश्च। अभिधेययोर्धात्वर्थप्रत्ययार्थप्रव नियमात्प्रकृतिप्रत्यययोः समभिव्याहारविशेषोऽप्युपपन्न इत्यर्थ प्रवर्तनाया अभिधेयत्वात्। शब्दव्यापारश्चाऽभिहित[4] इच्छासहक यतीति। कार्यकल्पनाऽप्युपपन्नेत्याह—शब्दप्रतीतप्रवर्तनाऽन्यथा कार्यकल्पनेति। तदेतद् दूषयति—नैतत्सारम्। तथा हि।

न प्रयोगाऽनिरूप्यत्वाद्वैयर्थ्यात्पूर्वदोषतः

अप्रवृत्तेः फलाऽयोगाद्रूपोक्तेर्व्यापृतिः श्रुतेः॥

विधिरित्यनुषज्यते। स च न व्यापृतिः श्रुतेरिति नि प्रयोगाऽनिरूप्यत्वादिति विवृणोति—न हि प्रेषणाऽध्येषणाऽभ्यनु

---

१. कारकात्वेन यत् २ पु० पा० : २. भाधनि

३. र्थानु का० वि०। ४. तः का० वि०

रो निरूप्यते । तस्य पुरुषधर्मत्वात् । नाप्यन्यस्तत्समर्थाचरणलक्षणः षादिवत् । अनुपलब्धेः । तत एवोपलब्धिः सम्बन्धापेक्षणाद-चीना । न च णिज्वत्प्रेषणाद्यतिरिक्ते तत्समर्थाचरणमात्रे लिङादयो पितप्रयोगाः । कारीषादिस्तु शीतापनोदनादिना शक्ततां सम्पादयन् हेतुः । शब्दस्तु कथमिति न निरूप्यते ।

य प्रयोगो व्यापारो निरूप्यते । ननु शब्दोच्चारणाऽनन्तरं तदवगमा-क्रमिति[1] कथं प्रेषणादिलक्षणः शब्दप्रयोगो न निरूप्यत इत्याह—तस्य र्मत्वात् । सत्यं शब्दविज्ञानाऽनन्तरमुपलभ्यते । न[2] त्वसौ शब्दस्या-यभेदत्वात् । प्रेषणादेरचेतनत्वेन शब्देऽसम्भवादित्यर्थः ।

अथ मा भूवन् प्रेषणादयः पुरुषधर्माः शब्दे, यथा तु कारीषोऽग्निर-यतीत्यध्ययनप्रवृत्तौ[3] समर्थं शीताऽपनोदनमध्येतुर्भावयन् कारीषो ध्ययने प्रवर्तयति पुरुषम् एवं लिङादयोऽपि प्रवृत्तिसमर्थं कञ्चिदुपकारं याऽऽचरन्तः स्वव्यापारेण प्रवर्तयिष्यन्तीत्यत आह—नाप्यन्यः प्रेषणा-सा[illegible]ऽऽचरणलक्षणः कारीषादिवत् । कुतः ? अनुपलब्धेः ।

[illegible] मा ज्ञायि प्रामाणान्तरेण, शब्दादेव स व्यापारोऽवगंस्यते[4] [illegible]षयितु[illegible] एवोपलब्धिरसमीचीना । कुतः ? सम्वन्धग्रहणा-निरू[illegible] । गृहीतसम्वन्धः खलु शब्दः स्वार्थमवबोधयति । [illegible]वसंवेदनाऽधीनः[7] । शब्दादेव चेदर्थः सम्वन्धी प्रति-[illegible]तरेतराश्रयं प्रसज्येत; सम्वन्धवोधे शब्दोऽर्थमवबोधयति, [illegible] सम्वन्धवोध इति । ननु यथा णिच्प्रत्ययः कारीषादीनाम-[illegible]नुकूलं व्यापारमभिधत्ते अभिधास्यन्ते तथा लिङादयः स्वव्या-पुरुषप्रवृत्त्यनुकूलां प्रवर्तनामित्यत आह—न च णिज्वत् प्रेषणा-क्ते तत्समर्थाऽऽचरणमात्रे लिङादयो निरूपितप्रयोगा मानान्तरेण नां व्यापारस्याऽनुपलब्धेरित्युक्तम् । णिज्वाच्यस्तु कारीषादीनां ो न तथेत्यत आह—कारीषादिस्तु शीताऽपनोदनादिना शक्ततां यन् प्रवृत्तिहेतुः । शब्दस्तु कथमिति न निरूप्यते वैयर्थ्यादिति

१. अत्रागमात् किमिति २ पु० पा० ।
२. चासौ का० वि० ।
३. त्तावसमर्थस्य का० वि० ।
४. गन्स्यते का० वि० ।
५. सम्बन्धाऽपेक्षणात् २ पु० पा० ।
६. र्थो का० वि० ।
७. अधीनजन्मा २ का० वि० ।

स्यान्मतम्—पवनादिरिव लिङादिः प्रेरयति पुरुषम्। अभिधानवैयर्थ्यात्। अप्रतीतव्यापारस्याऽपि वाय्वादेरिव प्रेरकत्वात्। पूर्वोक्तदोषापाताच्च। न हि प्रवृत्तिं प्रति कारकत्वे सदपि तद्व्यापाराऽभिधानमङ्गम्। अनभिहितव्यापारस्याऽपि तत्त्वात्[1]। कारकस्याऽनपेक्षितज्ञानत्वात्[2]। उपेत्यापि तु शब्द ब्रूमः। न प्रवर्तेत पुरुषः। प्रवर्तयतोऽपि शब्दस्याऽननुरोध्यत्वा सर्वस्मिन् प्रवर्तयितरि प्रवृत्तिः प्रेक्षावताम्, अपि त्वनुवि चार्थाऽनर्थप्राप्तिपरिहाराद्यनुविधानकारणं स्वाम्यादाविव शब्दे फलात्प्रवृत्तौ तद्वैयर्थ्यम्। तत एव फलाऽवगमादवैयर्थ्यमिति चेत्

विवरीतुं शङ्कते—स्यान्मतम्। पवनादिरिव लिङादिः प्रेरयति पु मानान्तरतस्तद्व्यापारग्रहणेनेति। निराकरोति—तदसत्। अ वैयर्थ्यात्। कुत ? अप्रतीत[3]व्यापारस्याऽपि लिङादेर्वाय्वादेरिव प्रेरकत्वात्, पूर्वोक्तदोषाऽऽपाताच्च। अप्रमाणत्वादिदोषप्रसङ्गादित

नन्वनभिधेयत्वे व्यापारस्यैते दोषा न त्वभिधेयत्वे इत्यु आह—न हि प्रवृत्तिकारकत्वे शब्दस्य सदपि तद्व्याप प्रवृत्तिं प्रति। अनभिहितव्यापारस्याऽपि तस्य कार कारकस्याऽनपेक्षितज्ञानत्वात्। एतेन वैयर्थ्यात्पूर्वदोषत अप्रवृत्तेरिति विवृणोति—उपेत्याऽपि तु शब्दस्य प्रयो पुरुषः। कुतः ? प्रवर्तयतोऽपि शब्दस्याऽननुरोध्यत प्रवर्तयितरि प्रवृत्तिः प्रेक्षावताम्, अपि त्वनुविधेये कस्मात्तेन भवतीत्यत आह—न चार्थाऽनर्थप्रा कारणं स्वाम्यादाविव शब्दे समस्ति। आदिशब्दाभ्यां ग्रहणम्। यद्युच्येत, फलप्राप्तिरनुविधानकारणमस्तीति, त्प्रवृत्तौ तद्वैयर्थ्यम्। तदिति शब्दव्यापारं परामृशति। शङ्कते च शब्दव्यापारात् शब्देन कृताऽवभासनात्[4] फलाऽवगमादवैयर्थ्यमि तन्न। फलाऽयोगात्, स्वव्यापारेण कृताऽवभासनेन। शब्दे प्र फलस्याऽयुक्तत्वमाह—आप्ते हि सप्रत्ययक्रिये हितकरे एव प्र अन्यथाऽनुपपत्त्या फलाऽवगमः। प्रमाणेन हिताऽहितप्राप्तिपरि त्त्वाऽवगतिराप्तिः, तया सह वर्तते इत्याप्तस्तस्मिन्। स च प्राप्तिपरिहारोपायतत्त्वाऽवगतावपि कदाचिदकारुणिकतया नो अत उक्तम्—हितकरे परेषाम्। एते च तत्त्वज्ञानकारुण्ये परात्मव

१. कार्यकरत्वात् मू० पु० पा०। २. अनपेक्षितव्यापारत्वात् मू०
३. तद्व्या का वि०। ४. सितात् का० वि०।

योगात् । आप्ते हि सप्रत्ययक्रिये हितकरे एव प्रवर्तयितरि अन्यथानु-
फलाऽवगमः । शब्दे तु किमनुपपन्नम् ? प्रवर्तनामात्रस्य वाय्वा-
विपरीतेऽप्युपपत्तेः ।

षश्रेयोऽर्थं प्रवृत्तेः शास्त्रस्य नैवमिति चेत् ? न । प्रमाणाऽभावात् ।
शास्त्रत्वाऽसिद्धेः लिङादिव्यापारे च विधौ स्वरूपाऽभिधान-
। अन्यथा शब्दविशिष्टव्यापाराऽप्रत्ययात्सन्निधानाद्विशिष्टत्वेऽर्थस्यापि
ङ्गात् । योग्यत्वस्योभयत्राऽपरिज्ञानात् । तस्मान्नाऽभिधेया भावना
रूपम् ।

गम्यते इत्यत उक्तम्—सप्रत्ययक्रिये । प्रत्यय उपदिष्टस्याऽर्थस्य
तरेण संवादस्तेन सह वर्तते इति सप्रत्यया क्रिया यस्योपदेशरूपा
यो[1]पदेष्टुः स तथोक्तः, तस्मिन् ।

एतदुक्तं भवति । यदेव यस्मै हितमुपदिशति कर्म तस्य तत्प्रवृत्तौ
प्तेः संवाददर्शनादुपदेष्टृवर्तिनी अपि तत्त्वज्ञानकारुण्ये ईषत्करज्ञाने
साधयन् प्रवर्तयितरि[2] तत्प्रवर्तनाऽन्यथानुपपत्त्या फलाऽवगम इति
… : किमनुपपन्नम् ? प्रवर्तनेति चेत् ? तत्राह—प्रवर्तना-
…के म…प्तप्रणेतृकस्य वाय्वादाविव विपरीतेऽप्युपपत्तेः । शङ्कते—
…शास्त्रस्य नैवमिति चेत् ? शासनाद्धि शिष्याणां शास्त्र-
… शङ्कितसमारोपितरूपव्यवच्छेदेन हिताऽहितप्राप्ति-
…म्, ततश्च शास्त्रत्वादेव पुरुषश्रेयोऽवगतिरित्यर्थः ।
…णाऽभावात् । प्राक् फलाऽवगमाच्छास्त्रत्वाऽसिद्धेः ।
…शास्त्रत्वे परस्पराश्रयप्रसङ्गादिति भावः ।

…न फलाऽयोगादिति विवृतम् । रूपोक्तेरिति व्याचष्टे—लिङादि-
च विधौ लिङादिस्वरूपाऽभिधानप्रसङ्गः । कस्मात् ? अन्यथा यदि
स्वरूपं नाऽभिधीयते ततस्तन्नाऽवगतमिति विशिष्टव्यापाराऽप्रत्ययात्
प्रसंनिधानात् तेन विशिष्टत्वेऽर्थस्याऽपि तद्व्यापारवत्त्वप्रसङ्गात् ।
…ऽविशेषात् । अथाऽर्थस्य प्रवर्तनां प्रति योग्यत्वं नाऽवधृतमिति
…ऽपि न तस्य प्रवर्तना व्यापार इति तत्राह—योग्यत्वस्योभयत्रा-
…ात् । न हि लिङादेरपि योग्यत्वमन्यतोऽवधृतमित्यर्थः ।
…र्थमुपसंहरति—तस्मान्नाऽभिधेया भावना विधिरूपम् ।

---

१. रूपा आप्तस्य २ पु० पा० । २. एतस्मिन्नाप्ते प्रवर्तयितरि० पु० पा० ।
३. स्यानाप्त का० वि० ।

अथ मतम्—अभिधैव भावना विधिर्लिङ्गाद्यर्थं इति । अत्रोच

प्रवृत्तेः सर्वतोऽर्थे वा प्रसङ्गात्कार्यतो गतेः ।
अस्थानान्नियतेर्हेतोरभावाच्चाऽभिधैव न ॥

विधिरित्यनुषज्यते । अभिधा चेद्विधिः सर्वशब्दानां यथा तद्भाव इति घटादिशब्देभ्यो ऽपि प्रवृत्तिप्रसङ्गः । अस्या[1] अभिधेयविशेषाद्भेदे स एव प्रवृत्तिहेतुरन्वयव्यतिरेकाभ्याम् । अ शब्दार्थ इति स्थितौ कार्योन्नेयाया अभिधायाः शब्दार्थ

अथ मतं, नाऽभिधेया भावनाऽभिधाभावनेति, अपि त्व ऽभिधाव्यापारः शब्दस्य भावना विधिर्लिङाद्यर्थ इति । तस्य संवेदनाफलप्रथितसद्भावस्य[2] प्रवृत्तिजननं प्रति सामर्थ्यमा भावः ।

अत्रोच्यते—

प्रवृत्तेः सर्वतोऽर्थे वा प्रसङ्गात्कार्यतो गतेः ।
अस्थानान्नियतेर्हेतोरभावाच्चाऽभिधैव

विधिरित्यनुषज्यते । स च नाभिधेति निषिध्यते प्रवृत्तेः सर्वतः प्रसङ्गादिति हेतुं विवृणोति—अ शब्दानां यथास्वमभिधेयेषु तद्भावोऽभिधाव्यापार शब्देभ्योऽपि प्रवृत्तिप्रसङ्गः । कुतः ? अस्या अ यद्युच्येत, अर्थाभिधात्वमात्रेणाऽविशेषेऽपि अभिधेयवि त्यभिधायाः । तादृशः खल्वभिधेयविशेषो लिङादीनां, ये प्रवर्तयति, न तु घटादिशब्दाऽभिधेति, तत्राह—अभिधेय एवाऽभिधाविशेष एव प्रवृत्तिहेतुर्नाऽभिधा । कुतः ? अन्वयव्यतिरे धेयविशेषाऽवगमे सति प्रवृत्तेः । सत्यामप्यभिधायां घटादिश प्रवृत्तेरभावादित्यर्थः ।

तदनेनाऽर्थे वेति विवृतम् । कार्यतो गतेरिति विवृणो लभ्यस्तु शब्दार्थ इति स्थितौ सत्यामर्थप्रतीतिलक्षणकार्योन्नेयास्तु

---

१. तस्याः—मू० पु० पा० ।
२. फलप्रवेदनीयसद्भावस्य २ पु० पा० ।
३. व्यापारभावः २ पु० पा० ।

। अत्रोच ...भिधाऽभिधाऽपेक्षणेऽनवस्थापातात् । अर्थाऽभिधैवाऽपेक्षते इति
: । नियामकस्य हेतोरभावात् । अर्थाऽभिधानस्य च । न ह्यत्र
॥ अर्थाभिधैवापेक्षते नाऽभिधेति । अभिधीयतेऽभिधेति पुरुषस्य
नां यथा ...रिति किं केन सङ्गतम् ? तस्मादभिधा न विधिः ।
प्रस्या[1] अ... अस्तु तर्ह्यर्थभेदः । नैतदपि ।
ाम् । अ... अपौरुषेये प्रैषादिर्न धर्मो नाऽवकल्पते ।

शब्दार्थ...त्वाच्छब्दार्थत्वमयुक्तम् । अस्थानादिति विवृणोति—अभिधायाश्चा-
अपि त्व...क्षणेऽभिधाऽभिधाऽप्यभिधात्वेनाऽभिधेया,[1] एवं तदभिधाऽपीत्य-
तस्य ...तः । शङ्कते—अर्थाऽभिधैवाऽपेक्षतेऽभिधां नाऽभिधेति चेत् ?
मर्थ्यमात्र ...ोति—न । नियामकस्य हेतोरभावात् ।

...पि चाऽर्थाऽभिधाऽभिधीयमाना तयैवाऽभिधीयेताऽभिधान्तरेण
...दाऽभिधान्तरेण तदा तयोर्यौगपद्यं क्रमो वेति विकल्पा उपप्लवन्ते ।
...तावत्प्रथमः कल्पः । स्वात्मनि वृत्तिविरोधेनाऽपास्तत्वात् । नाऽपि
ते: ... सा... फलान्तराऽनुपपत्तेः । न ह्यस्ति सम्भवः, पाकः, पच्यते,
... इति । क्वचिदस्ति, यथा ज्ञानं ज्ञायते इति चेत् । न ।
...के म...पपत्तेः फलान्तरोत्पादसमये च तस्य ज्ञेयतया कर्मकार-
...भावात् । अस्तु तर्हि क्रमः । प्रथमं लिङादिभिः स्वार्थो-
...षयितु...र्थो ऽभिधेति । तन्न । शब्दबुद्धिकर्मणामनावृत्तानां विरम्य
निरु...

वि ...वन्हि ...क्रमशोऽभिधानं प्रत्युक्तम् । तदनेनाऽभिसन्धिनाऽऽह—
ां, ये ...मभि... च । अर्थाऽभिधाया अपि हेतोरभावादित्यर्थः । अनेन
-अभिधेय ...इति...वाच्चेति व्याख्यातम् । चेत्यभिधानाऽभावहेतुसमुच्चयादिति ।
न्वयव्यतिरे ...भावमाह—न ह्यत्र हेतुरस्ति । अर्थाऽभिधैवाऽपेक्षतेऽभिधां नाऽभि
घटादिशब्द ...। अन्यलभ्यस्याऽपि शब्दार्थत्वाऽभ्युपगमादिति भावः । अपि
...ते लिङादिभिः स्वार्थाऽभिधेति च प्रेक्षावतां हिताऽहितप्राप्ति-
...नां प्रवृत्तिरिति किं केन सङ्गतम् ? न खलु प्रासादः श्वेत[3] इति
विवृणो ...दहनमाहरन्ति । उपसंहरति—तस्मादभिधानमपि न विधिः ।
ार्योन्नेया ...स्तु तर्ह्यर्थभेद एव लिङादीनां विधिः नैतदपि । कुतः ?
अपौरुषेये प्रैषादिर्न धर्मो नाऽवकल्पते ।

---

अभिधाभिधयाभिधेया २ पु० पा० । २. छेदः २ पु० पा० ।
श्वेतेति का० वि० ।

न च प्रवर्तनामात्रमविशेषमकर्तृकम् ॥

लोके हि प्रतीतः प्रेषणाऽध्येषणाऽभ्यनुज्ञालक्षणोऽभिप्रा प्रयोक्तृधर्मो लिङर्थः। तस्याऽपौरुषेयेषु वेदवाक्येष्वसम्भवः सम्भव इति चेत्? न। पौरुषेयत्वापत्तेः। वेदात्म इत्यतिस्थवीयः। तेनाऽसंदृब्धत्वेऽभिप्रायाऽवगत्यभावात्, संदृब्ध षेयत्वदोषात्।

न च प्रवर्तनामात्रमविशेषमकर्तृकम् ॥

लिङाद्यर्थभेदश्चेद्विधिस्तस्य लोकाऽधीनाऽवधारणत्वाल्ल प्रेषणाध्येषणाऽभ्यनुज्ञालक्षणस्य तस्योपलब्धेः स एव विधि तस्य च पौरुषेयतयाऽपौरुषेयेषु वेदवाक्येष्वसम्भव इत्याह प्रतीतः प्रैषणाऽध्येषणाऽभ्यनुज्ञालक्षणोऽभिप्रायाऽतिशयोऽनुविधेय धर्मतयाऽतिशयः प्रयोक्तुर्धर्मो लिङर्थः। तस्याऽपौरुषेयेषु वेदवाक्ये शङ्कते—लोकाऽवगतसामर्थ्याल्लिङादेर्वेदेऽपि श्रूयमाणात्प्रेष सम्भव इति चेत्? न हि दृष्टेऽनुपपन्नं नामेति भावः। पौरुषेयत्वापत्तेः[1]। येऽपि वेदान्तवादिनोऽपौरुषेयमङ्गीकृत्य णमन्तर्यामिणमास्थिषत 'अथाऽधिदैवं[2] यः सर्वेषु वेदेषु वेदेभ्योनन्तरो यं सर्वे वेदा न विदुर्यस्य सर्वे वेदाः शरी नन्तरो यमयति एष त आत्माऽन्तर्याम्यमृत' इति श्रु वेदात्मनोऽभिप्राय इत्यतिस्थवीयः। चेष्टेन्द्रियार्थाश्रय तद्विदः। न च कस्यचिदात्मनश्चेष्टादीनां वेदराशिराश्र न जातु देवदत्तादिशरीरवदस्मिन् बुद्धिपूर्वाः सन्ति क्रियाः। ऽऽप्यतैजसवायवीयाऽदृष्टोपनिबद्धकर्णनेमिमण्डलाऽवच्छिन्ननभोभ न्द्रियाणाममूर्त्तवेदाधारता सम्भवति। न च मनोमात्रस्य बाह पेक्षस्य भोगसाधनत्वमुपपद्यते।

एतेन विषयाश्रयत्वमस्य प्रत्युक्तम्। तस्माद्देहलक्षणाविर वेददेहस्याऽऽत्मनोऽभिप्राय इत्यतिस्थवीय इति। अपि च गामभ्याजेत्यादिवाक्येभ्यो वक्तुराज्ञादयोऽभिप्रायभेदाः प्रतीय तदा यद्यन्तर्यामी[3] वेदसन्दृब्धा[4] ततस्तेन तस्याऽसम्बद्धत्वेन त गत्यभावात्, सन्दृ[5]ब्धत्वे पौरुषेयत्वदोषादयुक्तमेतत्

१. त्वापातः का० वि०। २. अधिवेदम् १ पु० पा०। ३. मी न का० वि०। ४. द्र का० वि०। ५. द्र का०

तम्—अनेकसामर्थ्यपरिकल्पनादोषाद्व्यभिचाराच्च प्रैषादीनाम-व्यभिचारात्प्रवर्तनामात्रं लोके लिङाद्यर्थस्तस्य वेदेऽप्युपपत्ति-मप्य[1] चतुरस्रम्। निर्विशेषसामान्याऽयोगात्। अकर्तृकत्वे व्या-शेश्च। न तावत् प्रैषादयो विशेषा वेदे सम्भविनः। नाऽप्यन्यो दुपदर्श्यते। तदुपदर्शने वा सामान्याऽभिधानप्रसाधनमस्मिन्न-र्थम्। तदेतदपास्तसकलभेदं प्रवर्तनासामान्यं ब्राह्मण्यमिव ठादिभेदं स्यात्। प्रवर्तना च प्रवर्तयितुर्व्यापारः स नाऽतिविराजते। पुरुषस्याऽभावात्। शब्दस्य च प्रवर्त-कारणत्वात् प्रवर्तयितुरभावः।

मन्येत फलं प्रवर्तकं तद्व्यापारः प्रवर्तना, फलार्थिनः पुरुषस्य

मतं, तत्तत्प्रेषणाद्यभिप्रायविशेषाऽभिधानेऽनेकसामर्थ्यपरिकल्पना-चाराच्च प्रैषादीनामवाच्यत्वादव्यभिचारात्प्रवर्तनामात्रं लोके न पुनः प्रैषादयः। तस्य चाऽपौरुषेये वेदेऽप्युपपत्तिरिति। साधकत्वमी प्रैषादयः पुरुषनान्तरीयकतया तमवगमयन्ति, न [illegible]स्य तन्नान्तरीयकत्वाऽभावादिति भावः[3]। निराचष्टे—[illegible] कुतः? निर्विशेषसामान्याऽयोगात्। अकर्तृकत्वे [illegible] दूषयितु[illegible]

निरू[illegible]यति—न तावत्प्रैषादयो विशेषा वेदे सम्भविनः, [illegible]त्। नाऽप्यन्यो विशेषः कश्चिदुपदर्श्यते। तदुपदर्शने [illegible]नप्रसाधनमस्मिन्नवसरे व्यर्थम्, विशेषस्यैव प्रवर्तकत्वात्। इति[illegible]भेदं प्रवर्तनासामान्यं ब्राह्मणत्वमिव समुज्झितकठादिभेदं[4] कुसुमायमानं स्यादित्यर्थः।

विवृणोति—प्रवर्तना च प्रवर्तयितुर्व्यापारः, स तं प्रवर्तयितार-नाऽतिविराजते। ननु पुरुषः प्रवर्तयिता भविष्यतीत्यत आह—वात्। नापि शब्द इत्याह—शब्दस्य च प्रवर्तकत्वनिषेधा- तस्मात्प्रवर्तयितुरभावः, तदभावात्तद्व्याप्ततायाः प्रवर्तनाया यदि मन्येत फलं प्रवर्तकमिति तद्व्यापारोऽर्थिता प्रीत्यात्म[5]ता

---

पि० मू० पु० पा०। २. र्थः का० वि०।

तरीयकभावाऽभावात् २ पु० पा०। ४. भेदे का० वि०।

का० वि०।

तत्साधने प्रवृत्तेः । अन्यथा ऽभावात् । न कश्चिद्व्यापारविशेषः
तु प्रवृत्तिसमर्थं व्यापारमात्रं च प्रयोजकव्यापारः । भिक्षा वासयति
ऽग्निरध्यापयतीति दर्शनात् । तदसत् ।

अर्थिता व्यापृतिः पुंसो नियमः किंनिबन्धनः ।
फलसाधनता कर्मनिश्चेया साध्यता कदा ।।

फलार्थिता चेत् प्रवृत्तिहेतुः सेच्छा तद्योगो वा इच्छास
कृत्तद्धितसमासेषु सम्बन्धाऽभिधानं त्वतल्भ्यामिति वचनात् पु
न फलं व्यापृतिः । अथ तदिच्छोपहारमुखेन फलस्य प्रवृत्तिहेतु
त्मता फलव्यापारः प्रवर्तना ? साऽपि तत्रैव न कर्मणि । फ

वा प्रवर्तना । क[1]स्मात् ? फलार्थिनः पुरुषस्य फलसाधने[2] प्रव
फलव्यापारमन्तरेणाऽभावात् । न[3] हि कश्चिदेव विशेषो व्याप
अपि तु प्रवर्तन[4]समर्थं[5] व्यापारमात्रं[6] प्रयोजकव्यापारः, प्रवर्तन
यमर्थितालक्षणः प्रीत्यात्मता[7]लक्षणो वा फलस्य व्यापा
वासयति, कारीषोऽग्निरध्यापयतीति दर्शनात्, अन्नोपादा
नाभ्याम् । तद् दूषयति—तदसत् ।

अर्थिता व्यापृतिः पुंसो नियमः किं निब
फलसाधनता कर्म्मनिश्चेया[9] साध्यता

फलार्थिता चेत्प्रवृत्तिहेतुः सेच्छा, तद्योगो
कृत्तद्धितसमासेषु सम्बन्धाऽभिधानं त्वतल्भ्यामिति
पुरुषधर्म एव, न फलधर्म इति न फलं व्यापृतिः ।
ऽन्यव्यापारो भवितुमर्हति, अतिप्रसङ्गात् । शङ्कते—अथ
फलस्य प्रवृत्तिहेतुर्धर्मः, प्रीत्यात्मता फलव्यापारः प्रवर्तना,
सुखाऽनुशायिनी चेच्छेति फलेन सुखात्मना भवितव्यम्, सुखत्वेन
हरति, इच्छा च प्रयत्नं प्रसूते, इतीच्छोपहारमुखेन फलसमवायि
प्रवृत्तिहेतुव्यापारत्वाद् भवति प्रवर्तनेत्यर्थः । निराचष्टे--साऽ
ऽपि तत्रैव फले एव । न च फलं प्रवृत्तिविषय इत्युक्तम्, फले
कर्तुश्चेष्टेति । यत्र च फलसाधने कर्म्मणि प्रवृत्तिः तस्य च
प्रीत्यात्मतेत्याह—न कर्मणि ।

---

१. त का० वि० ।
२. तत्साधने २ मु०
३. न का० वि० ।
४. समर्थः का० वि
५. प्रवृत्तिसमर्थम् २ पु० पा० ।
६. त्रं च का० वि०
७. प्रवृत्तिसमर्थः २ पु० पा० ।
८. ना का० वि०
९. कर्मनिष्ठा या १ पु० पा० का० वि० ।

**सर्वत्र प्रवर्तेत । नियमनिमित्ताऽभावात् । तत्साधनत्वात् कर्मण्येव सर्वत्र । तत एव तर्हि तत्साधनत्वं प्रवृत्तिहेतुः कर्मणि म्, तच्च कर्मसमवायीति कर्म प्रवर्तकं स्यात् । एवं तर्हि तत्साध्यता ः, सा च फलसमवायिनीति न दोषः । तथा हि । समभिलषितस्य कर्मविशेषेण साध्यत्वात्तत्रैव प्रवृत्तिः । का पुनरियं साध्यता ? फलस्य, सर्वत्र प्रवृत्तिप्रसङ्गः । कारकविशेषः । स हि फलस्य तः शक्तिभेदो रूपादिवत् । अन्यथा कारकत्वाऽभावात् । यथा हि**

युच्येत, फलसमवायिनोऽपि प्रीत्यात्मताव्यापारात्पुरुषः कर्मणि ; तत्राह—फलव्यापाराच्च प्रवर्तमानः सर्वत्र प्रवर्तेत । कुतः ? त्वेन तत्साधनस्याऽन्येषां चाऽविशेषान्नियमनिमित्ताऽभावात् । —तत्साधनत्वात्कर्मण्येव प्रवर्तते । सर्वत्र सर्वेषां फलसाधनत्वा- परिहरति—तत एव तत्साधनत्वे सति प्रवृत्तिभावादेव । भवतु धनत्वं प्रवृत्तिहेतुः कर्मणि, न पुनः फलरूपम् । भवतु को दोष ? साधनतश्च कर्मसमवायि न फलसमवायीति कर्मैव प्रवर्तकं स्यात् । [illegible]र्हि तत्कर्मसाध्यता प्रवृत्तिहेतुः, सा च फलसमवायिनीति न [illegible] समवायिनी सा कथमन्यत्र कर्मणि प्रवृत्तिहेतुरतिप्रसङ्गा- [illegible] हि समभिलषितस्य तृप्त्यादेः कर्मविशेषेण साध्यत्वात्त- दूषयितुं [illegible]र्तनाऽन्यत्र ।

निरू[illegible]ति । फलसमवायिन्यपि असौ साध्यता[2] साधनाऽधीना- [illegible]नमपि गोचरयति, न पुनरसाधनमपि । तेनैव तस्मा- [illegible]व प्रवर्तयति, न तु सर्वत्रेति । तदेतद् दूषयति—का पुनरियं इति[illegible] रूपं फलस्य, ततस्तस्य साधनाऽधीननिरूपणत्वाऽभावान्न साधने प्रवर्तयेद्वा सर्वत्रैव, अन्यत्वाऽविशेषात् । चोदयति—कारकविशेषः । व्यावर्त्यते कर्मकारकं गगन[3]कुसुमादिभ्यो येन शक्तिभेदेन स ननु तथाऽपि कुतस्तस्य साधने प्रवर्तकत्वम् ? इत्यत्राह—स हि फलस्य तः शक्तिभेदः । अतः साधने प्रवर्तते इत्यर्थः । निदर्शनमाह— । कुतः शक्तिभेदप्रत्ययः ? इत्यत आह—अन्यथा यदि फलस्य शक्ति- स्यात्ततोऽस्य लौकिकपरीक्षकप्रसिद्धस्य कर्मकारकत्वस्याऽभावात् । रकमिति तद्विदः । दृष्टान्तदार्ष्टान्तिके विभजते—यथा हि रूपादीनां

---

प्रवृत्तिर्ना मु० पा० । २. साध्यता २ मु० पा० ।

गगन तत् कुसु मु० पा० ।

रूपादीनां शक्तिविशेषाद् ग्रहणे साधननियमः तथा फलेष्व
गगनतत्कुसुमादेरनुत्पादात्, तृप्त्यादेश्च कर्ममात्रेण। कदा पुनः
साध्यताऽभिधानः ? फलस्य भावसमये न तावत्। वैयर्थ्यादप्रवृ
न खलूत्पन्नस्योत्पादो, यद्योगिनी[1] शक्तिरर्थवती। नापि सिद्धे
कश्चित्प्रवर्तते। अभावकालेऽप्यसत्कथं शक्तिमत् खपुष्पवत् ?

ननु सदेव कार्यमुत्पद्यते ?

कर्मकारकाणां शक्तिविशेषाद्ग्रहणे चक्षुरादिसाधननियमः, त
द्रष्टव्यः[2]। सम्भवति खलु स तादृशः फलस्य कर्मकारकस्य सा
येनाऽभवनधर्मणश्च गगनकुसुमादेर्भवनधर्मणश्च घटादेस्तथ
विशेषाच्च भेदः सिध्यतीत्याह—गगनकुसुमादे[3]रनुत्पादात्।
फलस्य कर्ममात्रेण। तदेतद्विकल्प्य दूषयति—कदा पुनरयं शक्ति
ताऽभिधानः ? फलस्य भावसमये न तावत्। कुतः वैयर्थ्यादप्रवृ
वैयर्थ्यादिति हेतुं विवृणोति—न खलूत्प[4]न्नफलस्योत्पादः यद्यो
रर्थवती। अप्रवृत्तिहेतुत्वाच्चेति विवृणोति—नाऽपि सिद्धे
कश्चित्प्रेक्षावान् प्रवर्तते। फलस्याऽभावकालेऽप्यसत्
खपुष्पवत्। चोदयति—ननु सदेव कार्यमुत्पद्यते ?

इदमत्राऽऽकूतम्। यदसत्तन्न क्रियते यथा शशविषा
कार्यं[5] तदपि न क्रियेत, असत्त्वात्। क्रियते च, तस्मात्सत्
णत्वं भवनकर्तृतया व्याप्तं, सा चाऽसतो व्यावर्तमाना स्व
व्यावर्तयन्ती सत्येव व्यवस्थापयतीति प्रतिबन्धसिद्धिः।
विशेषेऽपि कस्मात् तन्त्वाद्यात्मका एव पटादयो, न कु
न ह्यसत्त्वे कश्चिद्विशेषः। तन्त्वाद्यात्मानश्चोपलभ्यन्ते। त
सन्तः पटादयः। अपि च यदि तन्त्वादिष्वसन्तः पटादयः, कस्मा
एव भवन्ति, न तु वार[6]णादिभ्यः ? पट एव वा तन्तुभ्यः
न जायन्ते कटादयः ? अतो न[7] खल्वसत्त्वे कश्चिद्विशेषः।
विधो नियमः स्वकारणे कार्यस्य सत्त्वमसत्त्वमन्यत्राऽवगम
चाऽशक्तादशक्यकार्यस्याऽनुत्पत्तेरतिप्रसङ्गात् शक्तादेव

---

१. उत्पादोपयोगिनी० मू० पु० पा०। २. व्यम् का०
३. गगनतत्कुसुमादेः २ पु० पा०। ४. अन्यत्र का०
५. चेत् कार्यम् २ मु० पा०। ६. वी मु० पा०
७. न मु० पा०।

ावदसत्कार्यवादिनोऽनुनाथ्य वक्तव्यम् ।

त्तव्यम्, शक्तियुक्तश्च शक्यः,[1] शक्तिश्च सम्बन्धरूपा भयाश्रया शक्याऽभावे न भवतीति शक्यभावोऽभ्युपेयः । कारणं नाम कार्योपहितमर्यादं यदि तदभावे नाऽर्हति भवितुम्, न पहितमर्यादं तत्तदभावे भवति; यथा कुण्डलोपहितसीमा कुण्डली ाऽभावे । तस्मात्कारणभावात्तत्र कार्यं सत् । तदिदं सत्कार्य- ीत[2]पञ्चकमाचख्युः साङ्ख्याः । परिहरति—इदं तावदसत्काय- नुनाथ्य[3] वक्तव्यम् ।

ाकूतम् । न तावत्क्रियमाणत्वमत्र प्रमाणं भवितुमर्हति, असाधा- अनुपलब्धिविरोधाच्च । यथा हि खल्वसद[4]शक्यक्रियमेवं सदपि सतीति शक्तिरपरिणामिन्यनन्ता क्रियागोचरः । अपि च[5] इद[6]म- मिन्द्रजालमार्येण शिक्षितं[7] यदिदमजाताऽविनष्टरूपाऽतिशयम्- मनतिदूरस्थानं तस्यैव तदवस्थेन्द्रियादेरेव पुंसः कदाचित्प्रत्यक्षं[8] येन कदाचिदस्य प्रत्यक्षमुपलब्धिः, कदाचिदनुमानम्, कदा- साध्स्मिन्नेवाऽनतिशयेऽमीषां प्रकाराणां विरोधात् । यदि मन्येत, [illegible]तिशयोत्पत्त्या पराऽतिशयनिवृत्त्या च व्यवहारभेदोप- [illegible]स्त्वमा भावपरिणतिविधा भवन्ति साङ्ख्यानाम्, धर्मलक्ष- [illegible]स्वं धर्मिधर्मलक्षणाऽधिकरणाः । तद्यथा सुवर्णतत्त्वमेकं [illegible]मा:, स्वस्तिकरुचकादयो धर्मा उपजनाऽपायधर्माण- [illegible]रिणामः, तथा हि । यदा खल्वयं हेमकारः स्वस्तिकं [illegible]यति तदा स्वस्तिको वर्तमानतालक्षणं हित्वाऽतीतता- [illegible] रुचकस्त्वनागततालक्षणं हित्वा वर्तमानतां प्रतिपद्यते । इति[illegible]रिणामो लक्षणगतः । प्रतिक्षणमुत्पत्तिनिरोधधर्माणोऽभिनव- वतराऽभिनवपुराणपुराणतरपुराणतमत्वादयः । प्रयत्नरक्षितस्यापि प्रान्ते पुराणतमत्वोपलम्भात् सोऽयं त्रिविधः परिणामोऽतिशय थाऽयमतिशयस्त्रिविधोऽपि धर्मिणि सनातनः कादाचित्को वा ? तनस्तदा स्वस्तिकादयश्च त्रैकाल्यं च नवपुराणत्वादयश्चाऽपर्यायं स्मिन् सुवर्णे उपलभ्येरन् । कादाचित्कत्वे तु कथं नाऽसता- तेषां शक्त्यात्मना सत्त्वादयमदोष इति चेत् ? न । शक्तिरति-

---

क्तः मु० पा० । २. धनमाच० का० वि० । ३. वाद्य का० वि० । शिश० का० वि० । ५. च कुतः का० वि० । ६. दं म० का० वि० । द्रजालकार्यम् २ पु० पा० । ८. प्रत्यक्षं च येन का० वि० ।

अपि च निरुपादानकार्याऽनुत्पादात्तदत्यन्तव्यतिरेकाऽभावण

शयश्च किमेकमेव तत्त्वं नाना वा ? तत्रैकत्वे जन्माऽजन्मनिव प्रत्यक्षतापरोक्षताऽर्थक्रियासूपयोगोऽनुपयोगश्चेति कथमेकत्र परस्परपराहतं युज्यते ? नानात्वे वा सत्त्वेऽपि शक्तेरसन्नतिशय इति कथं नाऽसत उत्पत्तिः ? सर्वदाऽतिशयस्य सत्त्वे वा कथं दोषप्रसङ्गः ? अतिशयस्य व्यक्त्यव्यक्तिभ्यामविरोध व्यक्त्यव्यक्ती अप्यतिशयस्य सदातन्यौ न वा ? तत्र सदातन विरोधप्रसक्तिः। कादाचित्कत्वे वा कथं नाऽसत उत्पादः ? ञ्चाऽसत उपपादयिष्यतेऽधिकारनिरूपणप्रस्तावे। असत्त्वेऽ सामर्थ्यनियमात् कार्यनियम उपपद्यते। अन्यथा भवन्मते पादानत्वाद्विश्व[2]स्य प्रधानस्य चाऽन्वयितया सर्वत्रैकरूपत्वा कत्वादुपादेयस्य कार्यजातस्य सर्वं सर्वतः सर्वत्र सर्वदा सर्वथा नेदमिदमिह नेदमिदमिदानीं नेदमिदमेवं नेदमिति नियमो कस्यचिदपि रूपस्य कथञ्चित्कदाचित् क्वचिद्विवेकहेतोरभा सत्त्वाऽविशेषेऽपि हेतुसामर्थ्यनियमादभिव्यक्तिनियम इति उत्पत्त्या किमपराद्धम्, येन तस्यामपि नियमो न स्यात् सर्वात्मकत्वादभिव्यक्तिभेदाऽनुपपत्तेश्च दुरधिगमो नियम

एतेन कुविन्दादिसमवधानेऽपि पटस्य नियमेन सत्कार्यसाधनं प्रत्युक्तम्। शक्तिश्च शक्यविषयाऽपि शक्यसद्भावं ज्ञानमिव ज्ञेयविषयमपि ज्ञानाश्रयमन्तरेणा कारणत्वञ्च कार्यं प्रति कारणस्य शक्तिभेदः। स च न कार्यकारणाश्रयः। निरूपणमप्यस्य कार्याऽवगमाधीनं, न ऽधीनमिति नाऽवीतपञ्चकं सत्कार्यसाधने प्रभवति। तस स्वव्यापारात्प्रागसत्कार्यमुत्पादयन्ति कारणत्वादभिव्यक्ति सत्कार्यवादिनो दर्शयाम्बभूवुः। तेनताननुनाथ्यैतद्वक्तव्यम्, मुत्पद्यते इति[4]।

अपि च समानतीर्था अपि स्वायम्भुवा एकान्ताऽन वदन्तो न सर्वात्मना सत उत्पत्तिमभ्युपयन्ति, अपि तूपादेयस्य सतो, न पुनरुपादेयरूपेणापि सत इत्याह—अपि च निरुपादान

१. विशेषस्य १ पु० पा० का० सं०। २. तन्त्वात्मकत्वम् २ पु
३. आश्रयो भवेत् २ पु० पा०। ४. इति। तस्मात् सर्वमवदातम्

ण सत उत्पत्तिरुच्यते । सर्वात्मना तु सत्त्वे तदनुपपत्तेर्वैयर्थ्याच्चो-
। साध्यं नोपादानम् । कथं तर्हि कर्म्म कारकम् ? नैव कर्मकारकं
त्मिति केचित् । विकार्यप्राप्ययोर्वा सत्त्वाददोषः । त्रैविध्यं
ते । कामं, न त्वसतः कारकत्वं शक्याऽध्यवसानम् । कथं तर्हि
तीति प्रयोगः ? उपादेयश्रुत्या उपादाननिर्देशात् । बुद्धिस्थस्य वा

व्यतिरेकाऽभावादुपादेयस्योपादानरूपेण सत उत्पत्तिरुच्यते ।
पादानात्कार्यं निरुपादानम्, तन्त्वादिभ्यो भिन्नदेशमिति यावत् ।
तदुक्तं भवति । यथा कुविन्दादिभ्यो भिन्नदेशे एतदुपलभ्यते, नैवं
यः, सोऽयं धर्मधर्मिभावो नैकान्तिकभेदे भवितुमर्हति, गवाश्वस्येव ।
ऐकान्तिके, धर्मिरूपस्येव । तस्मात्कथञ्चिद्भेदः कथञ्चिदभेद
। सोऽयमनेकान्ताऽभ्युपगम इत्यर्थः ।

थोपादेयस्वरूपेणापि सतः किमित्युत्पत्तिर्नोच्यते ? इत्यत आह—
तु सत्त्वे तदनुपपत्तेः । तस्मादुत्पत्तेरनुपपत्तेः । हेत्वन्तरमाह—
साधनानाम् । कुतः ? उपादेयवत् । उपादेयरूपेण तद्वत् तदन्वित-
[illegible] साध्यं साधनार्हं नोपादानम्, यतो निष्पादितक्रिये कर्मण्य-
[illegible] नस्य साधनन्यायाऽतिपातात् । ननु यद्यसत उत्पत्तिस्त-
[illegible] क्रियां प्रति निमित्तभावाऽभावात्कथं कर्मकारकम् ?
दूषयितु [illegible] कर्मकारकम् ? तदेकदेशिमतेन परिहरति—नैव कारकं
[illegible] त केचित् । यथाहुः 'कारकादुत्पत्तेः कर्मे'-ति । तदे-
वन्हि [illegible] कर्मसंज्ञाविधानविरुद्धमित्यनादृत्य पक्षान्तरमुपन्यस्यति—
[illegible] सत्त्वाददोषः । चोदयति—त्रैविध्यं तर्हि वैयाकरणप्रवर-
[illegible] हीयेत । निर्वर्त्यस्याऽसत्त्वेनाऽकर्मत्वात् । परिहरति—कामम्,
कारकत्वं शक्याऽध्यवसानम्; तत्रभवतोऽभियुक्तस्य पाणिनेर्विरोधे
स्याऽसद्वादित्व[2]मिति भावः । ननु यदि न निर्वर्त्यस्य कर्मता, कथं
करोतीति द्वितीयाप्रयोगः ? तस्माल्लौकिकप्रयोगविरोधात्पाणिने-
दित्वमित्यर्थः । समाधत्ते—उपादेयस्य घटस्य श्रुत्या । घटशब्देनेति
उपादानस्य कपालानां तादर्थ्यनिमित्तोपचारात् । उपादानस्य च
रकत्वोपपत्तेर्द्वितीयाप्रयोगसिद्धिः ।

तदुक्तं भवति, प्रयोगो लौकिको घटं करोतीति, न पुनस्तस्य
पि, औपचारिकस्याऽपि तस्य लोके दर्शनात्; मञ्चाः क्रोशन्तीति

. कटम् मू० पु० पा० । २. वादित्वात् २ पु० पा० ।

क्रियासूपयोगाद्युक्तो निर्वर्त्यस्य कारकभावः । यथोक्तम्—

व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्म्मणः ।
कारकत्वं तथासिद्धं बुद्धिरूपप्रकल्पितम् ।।

एतेन साध्यसाधनयोः परस्पराऽऽनुकूल्यं परास्तम् । अस्तु प्रवर्तकम् । अभिमतसाधनता तस्य प्रवर्तना, प्रवृत्तिहेतुरूपत्वात् विषयत्वात् । अपि च—

प्रज्ञायते लिङादीनां व्यञ्जनीया प्रवर्तना ।
प्रयोक्तृधर्म्मो न णिचो यथाऽनियतकर्तृका ।।

लोकाद्धि शब्दार्थाऽधिगमः । तत्र च प्रवर्तना नियताधारा प्र

यथा । तदिह कारके कर्तुरीप्सिततमं कर्म, कर्मणि द्वितीयेत्यभि चारिक इति निश्चीयते । अतो यस्य स्मृत्या विरोधो मुख्यत्व लौकिकत्वम्, यस्य तु प्रयोगस्य लौकिकत्वम्, न तस्य विरोध इ मुख्यत्वम्, तथाऽप्यविरोध इत्याह—बुद्धिस्थस्य वा क्रियासूपयोग निमित्तत्वोपपत्तौ युक्तौ निर्वर्त्यस्य कारकभावः । यथोक्तम्—

व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः ।
कारकत्वं तथा सिद्धं बुद्धिरूपप्रकल्पितम् ।।

आकृतौ हि पदार्थे तस्या नित्यत्वाज्जन्यमान तस्मान्न फलस्य शक्तिभेदः साध्यता । एतेन फलगतश करणमात्रेण साध्यसाधनयोः सिद्धिं प्रति परस्पराऽऽनुकूल्य परास्ता वेदितव्या । तत्राऽपि साम्यात्कदेति प्रश्नस्य ।

अस्तु तर्हि कर्म प्रवर्तकम् । अभिमतसाधनता तस्य व्यापारः । कुतः ? प्रवृत्तिहेतुरूपत्वात् । तथा खल्वभिमत[1] स्वयं दुःखरूपेऽपि पुरुषः प्रवर्तते । तदेतद् दूषयति—न, तस्य त्प्रवृत्तिकर्तुः प्रयोजकः प्रवर्तकः, सिद्धश्च स भवति, तदिह प्रवृत्तेः प्राक् प्रवृत्तेर्भावनाया विषयो न भाव्यम् । न जातु गगन भवितुमर्हति । विषयश्चेत्कर्म असिद्धत्वात्कथं प्रवर्तकमित्यर्थः ।

प्रज्ञायते लिङादीनां व्यञ्जनीया प्रवर्तना ।
प्रयोक्तृधर्मो न णिचो यथाऽनियतकर्तृका ।।

लोकसिद्धो हि शब्दसामर्थ्याऽधिगमः । तत्र च प्रवर्तना प्रयोक्तृसंश्रयैव लिङाद्यर्थोऽवगम्यते । णिजर्थस्तु सा अनि

१. अयमभिमतः २ पु० प० ।

ऽवगम्यते । णिजर्थस्तु साऽनियताधारा । न च णिजर्थवल्लिङा-
वितुमर्हति । यथालोकप्रज्ञानं शब्दार्थव्यवस्थानात्[1] ।

त्वेवं सति पुरुषप्रयत्नोऽनुवादो होमाऽनुगतस्तु व्यापारः इति दर्शनाच्चेतनकर्तृव्यापारात्मिका, इतरथा वा स्पन्दाऽस्पन्द-नौदासीन्यप्रच्युत्यात्मव्यापारमात्रं भावना विधिशब्दपर्याया लिङर्थो कालभेदा । लि[2]ङादिषु तु सत्त्वेपि कालविशेषेण विधिरूपप्रति-त्तिहेतुत्वात् य[3]द्यादिभिरिव लिङभिधेयाया इति दर्शनम्; ते—

नैकं विबद्धं न च तद्विशेषश्चेत्स कथ्यताम् ।
कालभेदाऽपरामर्शः कामं नाऽस्मात्प्रवर्तते ॥

दिषु कालभेदेन विधिरूपस्य प्रतिबन्धे भावनाज्ञानाऽभावो-र्थवल्लिङर्थोऽपि भवितुमर्हति, यथालोकप्रज्ञानं शब्दार्थव्यवस्था-गमम् । यस्य तु दर्शनमिति परेण सम्बन्धः कृतः । किं तदित्याह— पुरुषप्रयत्नोऽनुवादः, होमाधारगतस्तु व्यापारः श्रुत्योच्यत इति [illegible]प्रदेशेषु भाष्यकारव्यवहारदर्शनाच्चेतनकर्तृव्यापारात्मिका [illegible] । इतरथा स्पन्दाऽस्पन्दसाधारण्येनौदासीन्यप्रत्युप-[illegible]पारमात्रं भावना विधिशब्दपर्याया लिङर्थः ।

[illegible]षयितु[illegible] नैव विधिः पचत्यपाक्षीत्पक्ष्यतीत्यत्राऽप्यस्ति भावनेति [illegible]र्थत्वप्रसङ्ग इत्यत आह—अपरामृष्टकालभेदा प्रवृत्ति-[illegible]रपरामृष्टकालभेदा तद्धेतुः । सा च लिङर्थ । न त्वेवं [illegible]र्थः । लडादिषु सत्त्वेऽपि भावनायाः कालविशेषेण वर्तमाना-[illegible]विरूपप्रतिबन्धादप्रवृत्तिहेतुत्वान्न लिङादितुल्यार्थता, य[5]द्यादि-ङभिधेयाया इति । यथा 'यदि रथन्तरसामा सोमः स्या', 'द्यस्यो-तिमाच्छंती[6],-त्येवमादिषु; तं प्रत्युच्यते —

नैकं विबद्धं, न च तद्विशेषश्चेत्स कथ्यताम् ।
कालभेदाऽपरामर्शः कामं नाऽस्मात् प्रवर्तते ॥

दि हि भावना विधिरित्येकमेव तत्त्वं ततो लिङादिषु कालभेदेन तिबन्धे भावनाज्ञानाऽभावः । विधेर्भावनाया अभेदात् । अविवद्धे

वस्थापनात् मू० पु० पा० । २. लडादिषु का० वि० ।
ज्यादि मु० पा० । ४. लडाद्यर्थ इति १ पु० पा० । एवमग्रेपि ।
ज्या मु० पा० । ६. आच्छेंत् २ पु० पा० ।

ऽभेदात् । अविवद्धे भेदप्रसङ्गात् । न खल्वेकं विबद्धमविबद्धं
विशेषस्य प्रतिबन्धो न भावरूपस्य । विशेषरूपभावाऽभावाऽनु
प्रवृत्तिभावाऽभावयोः । स तर्हि विशेषो विधिः । न भा
विधिरुपदेशः प्रेरणमित्येकम् । निदर्शनीयश्चासौ । कर्तव्यतेति
तस्या एव बुभुत्सनात् ।

ननु कालभेदपरामर्शविरह एव विशेषः किमन्येन ? वर्तमा
अननुष्ठेयत्वात्तदभावेऽप्यनुष्ठेयत्वप्रतीतेः । भवत्वेष विशेषो न
प्रवृत्तिहेतुः । कामं प्रत्येतु कालभेदविविक्तां[1] भावनाम् ?
कुतः ? न हि वस्तुरूपमात्रप्रतिपत्तिः प्रवृत्तिनिमित्तम् । न ख
प्रतिपद्य ततोऽर्थं तावत्येव तस्मिन्प्रवर्तते । साध्यतया प्रवर्तत

वा भावनाया विवद्धाऽविवद्धविरुद्धधर्माऽध्यासाद् भेदप्रसङ्गात् । कल
ऽध्यासाऽसम्भवमेकस्य दर्शयति—न खल्वेकं विवद्धमविवद्धञ्च कल्पयि
चोदयति—विशेषस्य प्रतिबन्धो न भावरूपस्य । भाव इति ण्यर्थ्या
रजित्यचि कृते भावनामाह । परिहरति—विशेषरूपभावाऽभावा
प्रवृत्तिभावाऽभावयोः । स तर्हि विशेषो विधिः । अतो न
विधिरुपदेशः प्रेरणमित्येकं वस्तु । निदर्शनीयश्चासौ । श
कर्तव्यतेति चेत् ? निराकरोति—न । तस्या एव बुभुत्सनात्
विधिः, सैव तु कीदृशीति जिज्ञास्यत इत्यर्थः । चोदयति
मर्शविरह एव विशेषो भावनायाः कर्तव्यताविधिः, तत्कि
अत्रैवाऽन्वयव्यतिरेकौ दर्शयति—वर्तमानादिरूपाया भावन
त्तदभावे चाऽनुष्ठेयत्वप्रतीतेर्विधिनिबन्धनत्वाच्चऽनुष्ठेयत्व
ऽपरामर्श एव भावनायाः कर्तव्यता विधिरिति साम्प्रतम् । त
भवत्वेष विशेषः, न तु पुरुषस्य प्रवृत्तिहेतुः, अतद्धेतुश्च कथं वि
नुष्ठेयत्वाऽवगतेरेव प्रवृत्तिः सा च भावनायाः कालभेदाऽपराम
तीत्यत आह—कामं प्रत्येतु कालभेदविविक्तां भावनामयं पुमा
तु कुतो हेतोः ? ननु कालभेदाऽपरामर्शभावाऽभावाऽनुविधाना
ऽवगतिभावाऽभावयोः स एव विशेषः प्रवृत्तिहेतुरित्युक्तम्, तत्किं
इत्यत आह—न हि वस्तुरूपमात्रप्रतीतिः प्रवृत्तिहेतुः । कस्मात्
इति प्रतिपद्य ततो घटशब्दादर्थकालभेदपरामर्शरहितं तावत्येव
प्रवर्तते । तस्मादन्वयो व्यभिचारीत्यर्थः । शङ्कते—साध्यतया

१. विभक्तां मु० पा० ।

ता ? यद्यसिद्धत्वम्, खपुष्पम् । मृत्पिण्डाऽवस्थायां च घटो नास्ती-ङ्गः । अथ कारकविषयत्वं तैर्विषयीकृतायां प्रवृत्तिकारिकायां र्तेत ? साध्यायां चाऽनेन प्रवर्तितव्यमिति कुतस्त्यम् ? फलवत्ता-र्तेत इति चेत् ? । स एव कुतः ? अनुष्ठेयत्वाऽवगमादिति चेत् ? ऽनुष्ठेयत्वे फलकल्पना ततश्चाऽनुष्ठेयत्वमितीतरेतराश्रयत्वात् । वृत्तस्याद्या प्रवृत्तिः आकूतं चिकीर्षा अध्यवसायो वा लिङाद्यर्थः । ा प्रवृत्तिः प्रयत्नो वा देहवचनचेष्टा वा लडाद्यर्थ इति धानं प्रत्यूढम् । तद्धेत्वभावात् । पुरुषरूपमात्रप्रतीतेरप्रवृत्तेः, प्रतीतेश्च । तौ च भूतवर्तमानौ प्रतिबध्नीतो, नेतरः कालो, नुष्ठेयत्वाऽविरोधात् ।

कल्प्य निराकरोति—केयं साध्यता ? त तावत् कालभेदपरामर्श-कल्व्यभिचारादित्युक्तमधस्तात् । तथा च सति यद्यसिद्धत्वमत्यन्त-भ्यां खपुष्पम् । मृत्पिण्डाद्यवस्थायाञ्च घटो नास्तीत्यपि साध्य-त्तिप्रसङ्गः । अथ कारकविषयत्वम्, तैर्विषयीकृतायां प्रवृत्तिकारि-[illegible] प्रवर्तेत ? साधनप्रवर्तकत्वं हि कर्तृव्यापारः; प्रवृत्तानि [illegible] व्यापारे कृतं तर्हि प्रवर्तकेने[1]त्यर्थः । अपि च साध्यायाञ्च [illegible]क्षावता हिताऽहितप्राप्तिपरिहारार्थिना प्रवर्तितव्यमिति [illegible]ति—फलवत्ताऽवगमात्प्रवर्तेत इति चेत् ? निरकरोति—स [illegible]ात्वर्थभाव्यावरुद्धायां भवन्मते कुतः ? अनुष्ठेयत्वावगमा-[illegible] सिद्धेऽनुष्ठेयत्वे फलकल्पना, फलकल्पने चा[2]ऽनुष्ठानमिती-[illegible]। एवमेवाऽप्रवृत्तस्याऽऽद्या प्रवृत्तिः । तामेव विभजते—आकूतं [illegible]वसायो वा प्रयत्नस्तत्पूर्वो लिङर्थः, उत्तरकाला प्रवृत्तिः प्रयत्नो नचेष्टा वा लडाद्यर्थ इत्याचार्यदेशीयानां विशेषाभिधानं प्रत्युक्तम् । तिदिष्टं हेतुमादर्शयति—तद्धेत्वभावात् । तदित्याद्यां प्रवृत्ति परा-स एव कुतः ? पुरुषस्य रूपमात्रप्रतीतेरप्रवृत्तेर्हेत्वन्तरस्य साध्यताया य वाऽप्रतीतेः । अपि च स नाम कालभेदपरामर्शस्त्यज्यताम्, यः विहन्ति भावनायाः, अतीतवर्तमानौ च तथा; न त्वनागतः । तस्य विरोधाऽसिद्धेः । तेन पक्ष्यतीत्यादावनुपहतसाध्यभावा भावनाऽव-इति विधित्वप्रसक्तिरित्याह—ताञ्च भूतवर्तमानौ प्रतिबध्नीतो, कालो, भविष्यत्यनुष्ठेयत्वाऽविरोधात् ।

---

१. प्रवर्तकेन कर्त्रा. २ पु० पा० २. कल्पनातश्च. २ पु० पा० ।
३. इतरेतराश्रयत्वात्. २ पु० पा० ।

यदपि समर्थनम्—अप्राप्तसम्बन्धया क्रियया आत्मनः प्रतीत्या प्रवृत्तिः यथाऽद्य तवेदं कर्मेति लोके। अत्रापि तु प्रमाणान्तरेणाऽनधिगतमर्थमवगमयति विधित्वप्रसङ्गः।

न। निमित्ताऽन्तराऽप्राप्ते तस्य तदभिधानं, तत्र निमित्तान्तरस्य भविष्यत्त्वेनाऽभिधानादर्थस्य लिङादिभिस्तु तथाऽभिधानम्। ऽज्ञातज्ञापनमप्रवृत्तप्रवर्तनमुभयविधप्राप्तिप्रतिषेधेनाऽप्राप्तक्रियाक विधिरिति विधिविदामुद्गाराः।

नैतत्सारम्। यस्मात्—

न प्रवृत्तिर्योगधियो लोकेऽभिप्रायवेदनात्।
मृषा भवेत्तथा कामं[1] किं मुधैष प्रयस्यति॥

यदपि समर्थनम्, अप्राप्तसम्बन्धया क्रिययाऽऽत्मनः प्रतीत्या प्रवृत्तिः। यथाऽद्य तवेदं कर्मेति लोके। स्वामिना हि प्रत्युच्यते चैत्र! अद्य तव नगरगमनं कर्मेति तदा खल्वयं चैत्रः नगरगमनसम्बन्धं स्वामिवचनादन्यतोऽनधिगतमवगम्य गमनेऽनु[illegible] तथेहापि स्वर्गकामादेर्यागादिक्रियासम्बन्धं लिङादेरन्यतो[illegible] स्वर्गकामस्य यागादौ प्रवृत्तिरित्यप्राप्तक्रियाकर्तृसम्बन्ध ए[illegible] एकदेशी तु प्रसङ्गमापादयति—अत्राऽपि समर्थने पक्ष[illegible] श्रोतुः प्रमाणान्तरेणाऽनधिगतमर्थमवगमयति वचने [illegible] परिहरति चोदकः—न। निमित्तान्तराऽप्राप्ते क्रियाक[illegible] लिङादेस्तदभिधानम्, सम्बन्धाभिधानम्, तत्र लृडादौ निमि[illegible] भविष्यत्त्वेन रूपेणाऽभिधानादर्थस्य सम्बन्धस्य। लिङा[illegible] ऽभिधानं निमित्तान्तराऽप्राप्ततयाऽभिधानम्। अप्राप्ते हि द्वि[illegible] प्रतिषिध्यते, उत्पत्तिः प्रमितिश्च। तत्र मानान्तराऽनधिगतं वगमयति लृडन्ते यद्यपि प्रमितिरूपा प्राप्तिर्न समस्ति, समस्त्यु निमित्तान्तरादुत्पत्स्यमानस्यैव तस्य तत्राऽभिधानात्। न त्वेवं तद्वाक्यार्थाऽवगतिनिबन्धनं पुरुषप्रयत्नमन्तरेणाऽन्यतो यागा ऽसिद्धेरित्यर्थः। यत एवमतश्चाऽज्ञातज्ञापनमप्रवृत्तप्रवर्तनमुभय प्रतिषेधेनाऽप्राप्तक्रियाकर्तृसम्बन्धो विधिरिति विधिविदामुद्गार दूषयति—नैतत्सारम्। यस्मात्—

न प्रवृत्तिर्योगधियो लोकेऽभिप्रायवेदनात्।
मृषा भवेत्तथा कामं किं मुधैष प्रयस्यति॥

१. कामः मू० पु० पा०। २. लिङन्तवाक्यार्थे. २ पु० पा०।

प्रतां नामाऽयमात्मनः क्रियायोगं शब्दात् तं च तथाभावे तथेति विपर्यये नेतदेवमिति। प्रवर्तते तु कस्मात्? लोके त्वद्य तवेदं नादधिगतवक्त्रभिप्रायो यो यदभिप्रायाऽनुरोधी स प्रवर्तितुमर्हति, स्य प्रवृत्तेः। नन्विहापि शब्दाऽनुरोधी प्रवर्त्स्यति। न शब्दाऽनु- निमित्तम्। नन्वस्ति प्रामाण्यम्? तच्च प्रवृत्तौ समर्थितं भवति। त्वाऽऽपातात्। कथम्? भूतवर्तमानयोः सम्बन्धयोरभावात्। न चेत्पुरुषः प्रवर्तते न तत्स्यादिति मृषात्वापातः। पुरुष- हि प्रामाण्यम्, भवतु कामं मृषा, किमर्थोऽयमस्य शब्दप्रमाणी- : ? बहुतरं च तस्यैवमायसितव्यमापतति। सकलमिथ्याज्ञान-

प्रतां नामाऽयमात्मनः क्रियया योगं शब्दः, तञ्च तथाभावे संवादे च तथेति निश्चिनोतु। विपर्यये मानान्तरेण बाधे । प्रवर्त्तते तु कस्मात्? ननूक्तं यथा तवेदं कर्मेति लोके, इत्यत तु अद्य तवेदं कर्मेति वचनादधिगतवक्त्रभिप्रायभेदो यो ऽनुरोधी स तदभिप्रायाऽवगमात् प्रवर्तितुमर्हति। न हि तदा सम्बन्धबोधः प्रवर्तयति, अपि त्वनुविधेयाऽभिप्रायभेद आज्ञादिरि- [illegible] अन्यथा यदि क्रियाकर्तृसम्बन्धबोधमात्रं प्रवृत्तिहेतुः, न [illegible]दबोधः, ततः सम्बन्धबोधः सर्वसाधारण इति सर्वस्य दूषयितुं [illegible]—नन्विहापि शब्दाऽनुरोधी प्रवर्त्स्यति। यथा लोके- निरू[illegible] दूषयति—न शब्दाऽनुरोधे किञ्चिन्निमित्तम्। यथा [illegible] रहितभावः खल्वयं स्वामो हितं तु भृत्याय प्रयच्छति, [illegible]वर्त्ते। चोदयति—नन्वस्ति प्रामाण्यम्, प्रवृत्तिहेतुभावस्तस्य इति आह—तच्च प्रवृत्तौ समर्थितं भवति। कस्मात्? अन्यथा कर्तुः क्रियासम्बन्धविरह आत्यन्तिक इति तदभिधायिनो त्वाऽऽपातात्। पृच्छति—कथं पुनः प्रवृत्त्यभावे सम्बन्धा- उत्तरम्—भूतवर्तमानयोः सम्बन्धयोरुपलम्भाऽर्हयोरनुपलब्धेर- भविष्यत्यपि सम्बन्धे न चेत्पुरुषः प्रवर्तते ततस्तस्य कालत्रय- नकुसुमवदात्यन्तिकमसत्त्वमिति तद्विषयस्य न तत्स्यादिति ण्यं स्यादिति। सोऽयं मृषात्वापातः। तदेतद् दूषयति—पुरुष- हि प्रामाण्यम्। भवतु को दोष? इत्यत आह—ततः कामं शब्दः, किमर्थोऽयमस्य पुंसः शब्दप्रमाणीकरणप्रयासः? न प्रेक्षावतस्तत्प्रमाणीकरणे हितप्राप्तिरहितनिवृत्तिर्वा। यदि

---

ध्यभावः २ पु० पा०।

प्रमाणीकरणात् । ननु न शाब्दं मिथ्याज्ञानम् । द्विविधहेत्वभा
हेतुदोषो न स्यात्, बाधकस्तु दुर्वारः । भूतवर्तमानयोः संबन्ध
गोचरयोरनुपलब्धेः । भविष्यतो हेत्वभावात् । शब्दप्रामाण्यं
प्रवृत्तौ तस्य भावादितरेतराश्रयत्वात् । ननु स्वतः प्रामा
नेतरेतराश्रयम् । न । प्रवृत्तिहेत्वभावेन तस्याऽपवादात् ।
परिच्छेदकत्वात्स्वतोऽप्रवृत्तिकारणत्वात् । प्रवृत्तिहेतुसद्भावा
सिद्धेः ।

ननु च स्वतः प्रामाण्यात्प्रवृत्तिहेतुः कल्पयिष्यते तस्मात्प्र
परिच्छेदात् । अन्याऽपरिच्छित्त्या च प्रमितताहानात् । कः ?

प्रामाण्यसिद्धिमात्रमीहितं तत्र वहुतरं च तस्यैवमायसित
सकलमिथ्याज्ञानप्रमाणीकरणात् । चोदयति—ननु न शाब्दं
द्विविधहेत्वभावात् । तस्मात्प्रामाण्यमेव शब्दस्य पुरुषप्र
तीत्यर्थः । दूषयति—यद्यप्यपौरुषेयतया हेतुदोषो न स्या
दुर्निवारः । कुतः ? भूतवर्तमानयोः सम्वन्धयोरुपलब्धिगोच
कप्रत्ययान्तरसाकल्यस्वभावविशेषशालिनोरनुपलब्धेः ।
भावात् । हेत्वभावे च कार्याऽभावः । अन्यथा कादाचि
भावः । चोदयति—शब्दप्रामाण्यं भविष्यतः सम्वन्धस्य
न । प्रवृत्तौ तस्य प्रामाण्यस्य भावात् प्रामाण्ये तु स
राश्रयात् । चोदयति—ननु स्वतः प्रामाण्याद्विज्ञानस्य
प्रामाण्यमिति नेतरेतराश्रयम् । निराचष्टे—न । प्रवृ
प्रामाण्यस्यौत्सर्गिकस्याऽप्यपवादात् । ननु प्रमाणमेव प्र
प्रामाण्याऽन्यथानुपपत्त्या तदाक्षेपकत्वादित्यत आह—प्रमाण
कत्वात्, स्वतोऽप्रवृत्तिकारणत्वात् । प्रवृत्तिहेतुसद्भावादेव[1] प्र

इदमाकूतं, कोऽयमाक्षेपो नाम ? न तावत्प्रज्ञापनम् ।
कायाः खपुष्पवदत्यन्ताऽसत्याः प्रवृत्तेः प्रज्ञापने शब्दप्रामाण्य
दुत्पादकत्वमेषितव्यम् । तत्र चोक्तो दोषः । चोदयति—
प्रामाण्यात्प्रवृत्तिहेतुः कल्पयिष्यते । कस्मात् ? स्वतः सिद्ध
प्रमाणात् प्रमितस्य सिद्धौ तदन्यथाऽनुपपत्त्याऽन्यस्य
परिच्छेदात् । अन्यथाऽनुपपत्तिमेव प्रमितस्य दर्शयति—अन्य
च प्रमितताहानिप्रसङ्गात् । कोऽसावन्यः प्रवृत्तिहेतुः ?

१. सद्भावे च मू० पु० पा० ।

थिनोऽप्रवृत्तेः । क्रियासंबन्धस्याऽविशेषेण प्रवृत्तेः । कल्पितेऽपि पपत्तेः ।

र्गकामादय एव क्रियासम्बन्धिनः श्रूयन्ते ? सत्यं, न तु सर्वत्र यजेत', 'यावज्जीवमग्निहोत्रं जुहुयादि'ति । अत एव सर्वस्या- कत्र फलम् अन्यत्राऽपायपरिहारः कल्प्यते । सत्यम् । न त्वेव- पत्तिः । तथा हि—

र्थिनोऽपि नियोगेन न क्रिया न निमित्तिनः ।
ालस्यादन्तरायेभ्यो विहिताऽकृत्यभावतः ॥

लु फलकामो निमित्तवान्वाऽपायपरिहारप्रयोजनो नियोगतः मनुभवति, येन श्रुतक्रियासम्बन्धोपपत्तिः स्यात् फलाऽपाय- नयोः सतोः । यतो ह्यवश्यं क्रियासम्बन्धः स हेतुस्तमुपपादयितुं थं पुनः फलकामस्याऽपायभीरोर्वा न क्रिया ? अलसतया । न

यति—न फलवत्यप्यर्थिनोऽप्रवृत्तेः । ननु मा भूदनर्थिनः प्रवृत्तिः वत्स्यतीत्यत आह—क्रियासम्बन्धस्याऽविशेषेणाऽर्थिनोऽनर्थिनश्च [illegible]तेऽपि फले तस्मिन्नविशेषप्रवृत्तस्य क्रियासम्बन्धस्या- [illegible] खल्वनुपपद्यमानमुपपादकमुपकल्पयति, न पुनरनुपपद्यमान- [illegible] अनुपपादकञ्च फलमविशेषप्रवृत्तस्य क्रियाकर्तृ- [illegible]दयति । ननु स्वर्गकामादय एव क्रियासम्बन्धिनः श्रूयन्ते [illegible]दूषयति—सत्यम्, क्वचिन्न तु सर्वत्र । विश्वजिता यजेत, [illegible] जुहुयादिति । चोदक आह—अत एव सर्वस्याऽभिलषित- [illegible]त स्वर्गः फलमन्यत्र नैमित्तिकेऽपायपरिहारः प्रयोजनं [illegible]फलं तत्कामस्याऽनधिकारादिति सर्वशक्तौ प्रवेदयिष्यते । तदे- —सत्यम्, न त्वेवमपि श्रुतोपपत्तिः । तथा हि—

अर्थिनोऽपि नियोगेन न क्रिया न निमित्तिनः ।
आलस्यादन्तरायेभ्यो विहिताऽकृत्यभावतः ॥

खलु फलकामो निमित्तवान्वाऽपायपरिहारप्रयोजनः कर्ता नियो- सम्बन्धमनुभवति प्राप्नोति, येन श्रुतक्रियासम्बन्धोपपत्तिः स्यात्, रिहारकल्पनयोः सतोः । कस्मात्पुनर्न स्याद् ? इत्यत आह—यतो क्रियासम्बन्धः स हेतुस्तमुपपादयितुं क्षमते—पृच्छति । कथं पुनः विश्वजिदादावपायभीरोर्वा नैमित्तिके नावश्यंभाविनी क्रिया ?

---

प्रतीतेः २ पु. पा ।

तर्ह्यर्थिता। न प्रत्यात्मवेद्याऽर्थिता क्रियाऽभावेन शक्यनि
मरणादिभ्योऽन्तरायेभ्योऽप्रवृत्तिः। यदि च नियोगतः प्रवृ
ऽकरणाऽभावप्रसङ्गः। अपि च—

निमित्तान्तरतः प्राप्तिर्मोहादेश्च प्रकल्पते।
न चोपदेशकः शब्द उदीक्षेत ततः पुमान्॥

फले हि प्रवृत्तिहेतौ कल्प्यमाने न शब्दनिमित्तः क्रियासम्
शाब्दपरिप्रापित इति निमित्तान्तराऽप्राप्तताऽनुपपत्तिः। प्रमा
गतत्वादुपपत्तिर्यदि; लूडन्तेऽपि प्रसङ्ग इत्युक्तम्। अपि च
सम्भविनि क्रियासम्बन्धहेतौ नैकान्ततः फलवत्त्वं परिकल्प्यम्
पुरुषश्रेयोऽभिधायकत्वात्फलकल्पनेति चेत्। न। अशास्त्रत्वात्

उत्तरम्—अलसतया। प्रष्टुर्वचनं न तर्ह्यर्थिता। न ह्यस्ति सम्भ
तदक्रिया चेत्यर्थः। उत्तरम्—न प्रत्यात्मसंवेद्या मनसा संयुक्तस
ऽर्थिता क्रियाभावेनाऽनुमानेन शक्यनिह्नवा। अनुमानस्य मानसप्र
विषयतयाऽनुत्पादादित्यर्थः। तथा मरणादिभ्योऽन्तरायेभ्योऽर्थि
यदि च नियोगतः प्रवृत्तिस्ततो विहिताऽकरणाऽभ
चाऽकुर्वन्विहितं कर्मेति निर्विषयं प्रसज्येतेत्युक्तम्। अपि च

निमित्तान्तरतः प्राप्तिर्मोहादेश्च प्रक
न चोपदेशकः शब्द उदीक्षेत ततः पुम

फले हि प्रवृत्तिहेतौ[1] कल्प्यमाने सति न शब्दनिबन्धन
प्रसङ्गो[2] अपि तु शाब्दफलपरिप्रापित इति निमित्तान्त
पत्तिः। यदि मन्येत, भवतु फलं निमित्तमस्योत्पादकतया,
सम्बन्धस्याऽन्यतोऽप्रज्ञातस्य शब्दो निमित्तं भविष्यतीति शङ्क
न्तराऽनधिगतत्वादुपपत्तिर्यदीति। निराकरोति—लूडन्तेऽपि
प्रसङ्ग इत्युक्तम्। अपि च मोहयदृच्छादौ सम्भविनि क्रि
नैकान्ततः फलवत्त्वं क्रियायाः शक्यपरिकल्पनम्। औषधादा
प्रवृत्तेरुपपत्तेः। क्रियाकर्तृसम्बन्धस्य यदृच्छाहेतुरपि क्रिया
कलितलीलाकमलदलसङ्कलनादिलक्षणा लोकसिद्धैव। शङ्क
पुरुषश्रेयोऽविधायकत्वात् मोहयदृच्छादिपरिहरणात् फलकल्प
निराकरोति—न। अशास्त्रत्वात्। तद् दर्शयति—उपदेशकं

१ हेतौ निमित्ते. २ पु० पा०। २ संबन्धः २ पु० पा०।

न चैतेषामुपदेशका यजेतेत्यादयः शब्दाः। न ह्येभिरिदं यते। अपि तु स्वर्गकामादेर्यागसम्बन्धोऽवगम्यते, दण्डयादि-दण्डादिसम्बन्धः। स च भूतो वर्तमानो वाऽनुपलब्धिनिराकृत अवशिष्यते।

यं न प्रत्ययपूर्वं पुरुषः प्रवर्तते। सामुद्रविदाख्यातमिवाऽनिरूपित-यासम्बन्धमुदीक्षेत। तथा च वचनवैयर्थ्यम्, पुरुषकाराऽभावात्। दर्शनम्—प्रमाणान्तराऽगोचरः शब्दमात्राऽऽलम्बनो नियुक्तो-त्यात्मवेदनीयः सुखादिवत् अपरामृष्टकालत्रयो लिङादीनामर्थो

देशका यजेतेत्यादयः शब्दाः, यस्मान्न तैरिदं कुर्वित्युपदिश्यते, र्गकामादेर्यागेन सम्बन्धोऽवगम्यते यजेतेत्यादिशब्दैः। गम्यत-रूपम्। दण्ड्यादिश्रुतिभिरिवाऽनुपदेशिकाभिर्दण्डादिसम्बन्धो स च भूतो वर्तमानो वाऽनुपलब्धिनिराकृत इति भविष्यन्नव-तत्र च फलमिव मोहयदृच्छादयोऽपि हेतवः सम्भविन इति नासम्भव इति।

...यपूर्वं पुरुषः प्रवर्तते यथोपदेशकादिदं कुर्विति वाक्यात्, ...तमिवाऽनिरूपितनिमित्तविशेषं क्रियासम्बन्धमुदीक्षेत। ...ष? इत्यत आह—तथा च वचनवैयर्थ्यम्। कुतः? ... यत्र हि वचनादर्थं प्रतिपद्य प्रवर्तमानः समीहितं ...तत्रार्थो वचनस्य, तदभावे त्वप्रतीतेरप्रवृत्तेः[1]। समीहित-इति यदा तु वचनादर्थं प्रतिपद्याऽपि पुंसोदीक्षितव्यम्, न ..., तदाऽनर्थकं वचनमित्यर्थः।

टीकाकारीयं मतमुपन्यस्यति—यदपि दर्शनम् प्रमाणान्तरा-च निष्प्रमाणकः। यतः शब्दमात्रालम्बनः, शब्दमात्रमालम्बन-पादकतया यस्य स तथोक्तः। कथम्पुनरस्य शब्दप्रतिपाद्यत्वम्? ह—यतो लिङादियुक्तवाक्यश्रवणसमनन्तरं स्वर्गकामादिना नियुक्तो ऽस्मीति प्रत्यात्मवेदनीयः सुखादिवत्। यथा हि सन्ताप-ऽनुलेपनाऽनन्तरमान्तरमपि मनोमात्रप्रवेदनीयमामोलितलोचनः न्यप्रमाणकमनुभवति, एवं नियोगमपि लिङादिवाक्यश्रवणा-र्थः। प्रमाणान्तराऽगोचरत्वे हेतुमाह—अपरामृष्टकालत्रयः।

---

1. तीतेस्तदर्थाऽप्रतीतेः। २ पु० पा०।

अत्रोच्यते—

पदार्थ एव वाक्यार्थो न च सोऽनन्यगोचरः ।
नाऽकर्तृका क्रिया कालविविक्तश्च खपुष्पवत् ॥

स खलु शब्दप्रमाणको वाक्यार्थः पदार्थो वा । तत्र पदा न्तरोपकल्पितविशेषस्य वाक्यार्थत्वादपदार्थत्वे तदनुपपत्तिः वाक्यार्थवादिनोऽपि तद्विशेषो वाक्यार्थः सम्बन्धिनश्च पदार्था

सदुपलम्भनानि हि प्रत्यक्षादीनि मानान्तराणि, कालभेदसम तद्विषयाणाम्, अयं पुनर्नियोगोऽतीताऽनागतवर्तमानादीनामन्यत न परामृश्यत इति कार्यतया न मानान्तरगोचरः । कार्यप्रतीय विद्यमानोपलम्भनत्वम्, नाऽतीताऽनागतप्रतिपक्षतया । तेनाऽनु ताऽनागतविषयेष्वपि तदस्तीति न भागाऽसिद्धता हेतोः । सोऽनन्ध मर्थो नियोगो विधिः । एवंविधार्थत्वे च चोदनाया अनपेक्षत्व सिद्धिरिति ।

अत्रोच्यते—

पदार्थ एव वाक्यार्थो न च सोऽनन्यगोच
नाऽकर्तृका क्रिया कालविविक्तञ्च खपुष्पव

स खलु शब्दप्रमाणको नियोगो वाक्यार्थः अपदार्थस्य तस्य वाक्यार्थत्वं दूषयति —तत्र पदार्थस्यैवैक कल्पितविशेषस्य वाक्यार्थत्वाल्लोके तथा दर्शनात् । अपदा सम्वन्धवाक्यार्थवादिनोऽपि मते न तावत्सम्वन्धमात्रं विशेषनिवन्धनव्यवहाराऽनङ्गतया वाक्यश्राविणः क्वचि प्रवृत्तिनिवृत्त्योरनुपपत्तेः । तस्मादेतद्विशेषो वाक्यार्थः । न द्विशेषः, असम्वन्धरूपत्वात् । सम्वन्धश्च विशेष्यमाणः शेषणीयः । तस्य सम्वन्धिनिरूपणतया स्वरूपेण विशे सम्वन्धिनश्चास्य पदार्था इति नियोगेनापि सम्वन्धिना सत भवितव्यम्, नाऽपदार्थेन । न च सम्वन्धमात्रं वाक्यार्थ सम्वन्धमात्रमविशिष्टं सम्वन्धिभिः पदार्थैः पदार्थ ए ऽन्वयव्यतिषङ्गादिपदगोचरमात्रमेव, न तु विशिष्टव्यवहारार्ह तस्मात्सम्वन्धवाक्यार्थवादिनोऽपि मते नाऽपदार्थो नियोगो उपपद्यते । अपदार्थस्यापि सम्बन्धभेदस्यैव वाक्यार्थत्वात् । अ

१. सत्तासंबन्धश्च. २ पु० पा० ।

र्थार्थः ।

तर्हि पदार्थः ? नैवम् । अनन्यप्रमाणगोचरस्य तत्त्वाऽनवक्लृप्तेः । दनसापेक्षत्वात् । तस्य च सम्बन्धिपरिच्छेदपुरःसरत्वात् । च तस्याऽयोगात् ।

स्त शब्दः प्रमाणम् ? न । इतरेतराश्रयत्वात् । प्रमिते हि शब्देन म्बन्धग्रहः, सति च तस्मिन् शब्देन तस्य प्रमा । अविदितसङ्गतेः तेः प्रत्ययस्य चाऽप्रत्यायकत्वात् ।

ऽसम्बन्धितया तदवच्छेदकत्वाऽनुपपत्तेरित्युक्तमित्यर्थः ।

तीयं विकल्पमवलम्बते—अस्तु तर्हि पदार्थः । निराकरोति— अनन्यप्रमाणगोचरस्य तत्त्वाऽनवक्लृप्तेः । पदार्थत्वाऽनुपपत्तेः । न्धसंवेदनसापेक्षत्वात्पदार्थत्वस्य । भवतु संवेदनसापेक्षता, ततः त्यत आह—तस्य च सम्बन्धसंवेदनस्य सम्बन्धिपरिच्छेदपुरस्सर- एवमपि किम् ? इत्याह—प्रमाणादृते कार्यसम्बन्धिपरिच्छेद- त् । परिच्छेदो हि प्रमाणस्य फलम्, तन्न तदभावे भवितुमर्हति, ...जाभावे इत्यर्थः । चोदयति—नन्वस्ति शब्दः प्रमाणम् । ...रेतराश्रयत्वात् । तद् दर्शयति—प्रमिते हि शब्देन नियोगे तेन ...ति च तस्मिन् सम्बन्धग्रहे शब्देन तस्य नियोगस्य प्रमा । षयितुं...

निरु... अस्ति खलु लिङादेस्तादृशः सामर्थ्याऽतिशयः, येनाऽगृहीत- ...णविषयः कतिपयश्रवणसहकारी[1] जनयति विलक्षण- ...। कतिपयश्रवणसमनन्तरं तद्भावात् । न चाऽन्येनाऽगृहीत- ...शब्दाः स्वार्थमभिदधतीत्यनेनापि तथा भवितव्यम् । मा ...साक्षात्कार्यार्थतेत्यस्यापि तथाभावः ।

राकरोति—प्रमान्तराऽविदितसङ्गतेः पदस्य प्रकृतेः प्रत्ययस्य यकत्वात् । अयमभिसन्धिः । प्रथमश्रवणादिव संबन्धाऽग्रहे शतशो- न लिङादेर्विलक्षणविषयबोधाऽनुत्पत्तेः, व्यवहारदर्शनस्य चाऽर्थ- न्धदर्शनगर्भतयोत्पत्तेरुपपत्तेर्नाऽदृष्टचरसामर्थ्याऽतिशयपरिकल्पनादौ शब्दमात्रवर्त्तिसम्बन्धाऽपेक्षाऽपवादोऽसति[3] बलवद्बाधकोपनिपाते ति ।

---

[1] कतिपयश्रवणकुहरचरः—२ पु० पा० । [2] औत्सर्गिक—१ पु० पा० ।
[3] अपवादो नापि. २ पु० पा० ।

**प्रैषादीनां लोके प्रतीतेस्तद्गतस्य तदुपाधेः सम्बन्धग्रहः ।**

अत्र चोदयति—प्रैषादीनां लोके प्रतीतेस्तद्गतस्य तदुपाधेः इदमाकूतम् । कार्याऽभिधायिता तावल्लिङादीनामवगता माणवक ! समिधमाहरेत्यादिषु । तथा हि । एतद्वाक्यश्रवणाऽनन्तरं समिदाहरणे माणवकमुपलभ्य पार्श्वस्थो व्युत्पित्सुरेवमवधारयति मस्य प्रवृत्तिः, स्वतन्त्रप्रवृत्तित्वात्, मदीयप्रवृत्तिवत्, यच्चाहं बुद्धे देवायं मदविशेषात् । अहं च न क्रियामात्राऽवगमान्नापि गमान्नापि फलसाधनत्वाऽवगमात्; किन्तु कार्यताऽवगमात्[1] । ऽर्भकः स्तनपानादिकामपि क्रियां कार्यतया यावन्नाऽवगतवान् त्तस्यामपि प्रवृत्तः । न च या श्रेयःसाधनता सैव कार्यता । हारस्थितिलक्षणविरोधाधारत्वात् । न ह्यस्ति संभवः, यदेव साधनत्वं तदेव कृतिं पुरुषप्रयत्नं प्रति साध्यत्वमिति । कर्मणः फलसाधनताऽन्वयिनी कार्यतेति केचिदभेदं प्रतीतव सुखस्य फलसाधनतां विना च कार्यताऽवगतिरस्ति । अतः ऽतिरिक्तकार्यताबोधात् प्रवृत्तिर्ममेति माणवकोऽपि तदवबो इति निश्चिनोति । तदवबोधश्चास्याऽऽचार्यवचनाऽनन्तरम् वन्धन एवेति कार्याऽभिधायितां शब्दस्य कल्पयति तच्च भिधेयमिति स्थितौ सत्याम् 'अग्निहोत्रं जुहुयात्स्वर्गकाम' षष्ठाद्यराद्धान्ताऽनुसारेण स्वर्गकामपदेन नियोज्यतया स्व इति स्थितम् । यश्च कार्यमवबुध्यते स नियोज्यः । स्वर्ग कामविशिष्टः । स च तस्मिन्नेव कार्ये नियोज्यतयाऽन्व काम्योपायतामनुभवितुं शक्नोति । न च क्रिया क्षणभङ्गिनी क फलहेतुरिति न कार्य्यतया नियोज्येन सहाऽन्वेति । यत्कालान्त तदेव तेन सहाऽन्वयं गन्तुमर्हतीति क्रियाऽतिरेकिमानान्तराऽवेद्य कार्यमभिदधतीति । तच्च मानान्तराऽपूर्वतया अपूर्वमिति च ऽवगम्यमानमात्मनि पुरुषं नियुञ्जानं नियोग इति च व्यपदि क्रियाऽनन्तरं भवदपि देशकालादिसहकार्यपेक्षया अनन्तरम भावयति । न च फलजनकतया गुणभावादपूर्वस्य वाक्यार्थत्वहा गुणनियोज्यलाभाय फलानुकूलताऽवलम्बनात्स्वमिवत् । यथ संविदधानः[2] स्वामी गर्भदासस्योपकरोति, तथैतदपि । न च

---

१ कार्यमात्राऽवगमात्. २ पु० पा० । २. संविधाने. २ पु०

त्र तर्हि प्रतीतेः सम्बन्धज्ञानं न नियोगस्य। उपाधयस्ते न व्यभिचारात्। प्रवर्तकस्तेष्वनुयायी शब्दार्थः। सर्वत्राऽपरि-

रम्। उपाधयश्चेन्मानान्तरसिद्धाः नैकस्तेष्वन्वयी प्रवर्तको

. लोकव्युत्पत्तेरेव वेदवाक्याऽनुसारेण अपूर्वपर्यन्तगमनात्। न ऽभिधायिता लिङादीनां न प्रतीयते। वदति हि माणवक आचार्य- वर्त्तितः कार्यमवबोधित इति यावत्। न खल्वन्यथा चेतनः शक्यते। यतस्तदेवं प्रैषादीनां लोके प्रतीतेः कार्याऽवबोधमन्तरेण च त्तेस्तद्गतस्य सम्बन्धग्रहस्तदुपग्रहमपीह्य च वेदे पर्यवसानात्।

प्रैषादयोऽप्यवगम्यन्ते लोके, तत्कथं कार्याऽभिधायकत्वमेव म्? इत्यत आह—तदुपाधेः। प्रैषाद्युपाधेः। एतदुक्तं भवति, ते, न तु शब्दार्थाः। त एव चोपाधयः ये तटस्थाः प्रयोगदर्शन- ार्थं विशेषे व्यवस्थापयन्ति, यथा हरिपदाऽभिधेयस्य पशुत्व- तथा हि। पशुत्वं तटस्थमेवाऽभिधानाऽविनिवेशादिति हरिपदार्थं [illegible] पशावेव नियच्छति। एवं प्रैषादयोऽप्यभिधानाऽविनिवेशिन [illegible] मं व्यवस्थापयन्ति, न पुनरभिधेया इति सम्बन्धग्रहणसम्भ- [illegible]धानं लिङादीनामिति।

[illegible]षयितु[illegible]

निरू[illegible]ति—तेषां प्रैषादीनामेव तर्हि प्रतीतेः सम्बन्धज्ञानं न [illegible] ननूक्तमुपाधयस्ते न शब्दार्थाः, व्यभिचारात्। न हि [illegible]ः, समं प्रत्यामन्त्रणेऽपि तस्याप्रयोगात्। नामन्त्रणाम्, [illegible]ध्येषणेऽपि प्रयोगात्। नाऽध्येषणम्, हीनं प्रति प्रेषणेऽपि सोऽयं व्यभिचारः।

[illegible]र्तकस्तेष्वनुयायी शब्दार्थः। कुतः? सर्वत्रऽपरित्यागात्। सर्वेष्वेव [illegible]र्तव्यतैका संभवेत्[2]। अन्यथा स्वतन्त्रप्रवृत्तेरनुपपत्तेरित्युक्तम्। [illegible]व्यताऽभिधायिनो लिङादयः स्वर्गकामपदसम्बन्धान्नियोज्यविशेष- [illegible]स्वर्गाद्यनुकूलस्याऽऽशुतरविनाशियागाद्यतिरिक्तस्याऽपूर्वस्याऽभिधा- [illegible]देवं प्रमाणान्तराऽगोचरता लिङाद्यर्थता नियोगस्येति सिद्धम्।

[illegible]षयति—नैतत्सारम्। उपाधयश्चेन्मानान्तरसिद्धा, नैकस्तेष्वन्वयी

हरत्वम् २ पु० प०।

संप्लवते. २ पु० पा०।

नियोगः। प्रमाणान्तरगोचरत्वात्तेषां सम्बन्धज्ञानं न तस्य विषयस्य सम्बन्धस्य प्रत्येतुमशक्तेः। त एव च शब्दार्था त्वान्नेतरे।

प्रवर्तको नियोगः। अपूर्वमिति यावत्। अतः प्रमाणान्तर मुपाधीनामेव सम्बन्धज्ञानं लिङादिवाच्यत्वज्ञानम्। न तस्या नियोगस्य। कुतः? अविदितविषयस्य सम्बन्धस्य प्रत्येतुमशक्तेः

भवतूपाधिषु सम्बन्धज्ञानम्, मा च भूदपूर्वे, किमेतावता? त एव शब्दार्था विदितनियोगसंगतित्वात् नेतरे नियोगसङ्ग हात्। इदमत्राकूतम्। सत्यं कर्तव्यताऽभिधायिनो लिङाद तु क्रियाया एव, नाऽपूर्वस्य, लोकाधीनाऽवधारणत्वाच्छ तस्या एव च कार्यतया प्रवृत्तिहेतुत्वेन स्वात्मनि मानान्तरेण नन्वपूर्वस्य तस्य मानान्तराऽगोचरत्वात् कर्तव्यतामात्रवि लोके लिङादीनां स्वर्गकामपदसम्बन्धाद्वेदेऽपूर्वविशेषप्रतिलम्भ अस्तु तावदस्यैव तु कर्तव्यस्य लिङाद्यर्थता, न पुनः क्रियाया अ इति कुतस्त्यम्? अनेकार्थत्वस्याऽन्याय्यत्वात्। लक्षणस्य व्यायां क्रियायां लौकिकस्य लिङादीनां प्रयोगस्योप नान्तरीयकत्वात्। क्रियाकर्तव्यताया असाधिताया: धनत्वाऽनुपपत्तेः[1]। लौकिकप्रयोगाऽविरोधात्। लौकिकक्रियाकर्तव्यातानान्तरीयकत्वाऽनुपलब्धेर्वैपरीत्याऽनु गाभ्यासाल्लाक्षणिकस्यापि वाचकत्वाऽभिमानादपूर्वाऽभिध चेत्? नन्वनेकार्थत्वमन्याय्यमित्येतदेव कुत.? अनेकश दिति चेत्? नन्वपूर्वमपि नैकविधप्रधानाङ्गवर्ति नानेति लिङः? कृतिव्याप्यतायाः प्रवृत्तिनिमित्तस्य सर्वत्राऽविशेषाद्रू णामेकशक्तिरस्या लिङ एकहायन्यादिशब्दवदिति चेत्? स्विन्या क्रियया किमपराद्धम्? यदस्यां कर्तव्यतारूपायाम पतिरिव लिङादिः शक्त्यन्तरमुत्कोचं रोचयते। शब्दसाम्येऽ भेदादयमदोष इति चेत्? न। भेदाऽभावात्।

यदि मन्येत, यद्यपि कर्तव्यताशब्दसाम्यं तथाऽपि कृति तमता कर्तव्यताऽपूर्वस्य, तदुद्देशेन पुरुषप्रयत्नस्येति कृतेः लिङादिप्रवृत्तिनिमित्तम्। न चैवंरूपा क्रियाकर्तव्यता, तस्या

---

१. क्रियाकर्तव्यतानान्तरीयकत्वात्। अपूर्वकर्तव्यताया असाध

२. पु० पा०।

ानभावाऽनुपपत्तेः ओदनाद्यर्थप्रवृत्तकृतिव्याप्यतालक्षणौदनादि-: कर्तव्यता, सा त्वन्यत्वान्न शक्त्यन्तरमन्तरेण लिङादिगोचर न। विशेषाऽभावात् क्रियाकर्तव्यतायाः। न खल्वपूर्वमुद्दिश्य तुमर्हति। सा हि पुरुषप्रयत्नः। स चेच्छानुशयीति तदेवो- यदिच्छाकर्म तदेव च तस्याः कर्म यत्सुखं सुखानुशयित्वादि- न चाऽपूर्वं सुखमिति कथमिष्टम्? अनिष्टं चेत् कथं तदुद्देशेन तः? शब्दात्तथाऽवगतेः। असुखमप्यनिष्ठमप्यपूर्वं कृतिं प्रति चेत्? तत्किं शब्दोऽवगमयतीत्यनग्निरप्यस्तु धूमः? आनन्द- विज्ञानम्, 'विज्ञानमानन्दमि'ति श्रुतेः। प्रमाणान्तरविरोधान्नैव- ? न। इहाऽपि तस्य साम्यात्। समिदादिविषयस्याऽपूर्वस्या- ाऽनुष्ठेयाऽधिकाराऽपूर्वपरत्वेन कर्तव्यतात्वाऽभ्युपगमनात्। लत्वादपूर्वस्याऽसुखस्यापीच्छाविषयत्वमिति कुतो मानान्तरविरोध न। क्रियायामपि समीहितसाधनतायास्तथाभावात्। नैमित्तिक- योश्च फलविरहिणोस्तदनुपपत्तेः। एवं च नैमित्तिकनिषेधा- पूर्वसिद्धिर्लिङादीनाम्। निमित्तवतो निषिध्यमानक्रियाकर्तुश्च [illegible]वच्छिन्नस्य नियोज्यस्य क्रियाकर्तव्यताऽवगमाऽविरोधात्। [illegible]के मभावस्याऽशब्दार्थभूतकल्पिताऽपूर्वद्वारेणाप्युपपत्तेः। अपि च [illegible]ोऽपि नियोज्यः कस्मात् क्रियामेव नावैति कर्तव्याम्? [illegible]षयितु[illegible]शिनीत्वेन तदनुकूलत्वाऽभावात्। तद्धि तदुत्पादाऽनुकूलं निरू[illegible]त्पद्यते, नाऽसति। न चाऽऽमुष्मिकं स्वर्गादि सति कर्मणि [illegible]वर्ति[illegible]। तस्मिंस्तदुपपत्तेरिति चेत्? किमिदानीमाग्नेयादिष्वपि [illegible]धिकाराऽपूर्वस्य, भाक्तो वा साधनभावस्तेषाम्? न हि तस्य [illegible]तिकर्तव्यतासम्बन्धो घटते। न जातूपचरितवह्निभावो माणवको [illegible]रुपयुज्यते। तेषां च विषयत्वमेकं नाना च करणत्वं भवद्भिरभ्यु- [illegible]योर्भिन्नप्रस्थानोपधारूपत्वात्। प्रतिपत्त्यनुबन्धो हि विषयो[1] व्यवतिष्ठते। तत्रोच्चारिताश्चाऽऽग्नेयादयो दर्शपूर्णमासाभ्यां यजेतेति सकृदवगतेस्तथैव विषयभावमनुभवन्तीत्येकमेवैषाम- र्वं प्रति विषयत्वम् उत्पत्त्यनुबन्धस्तु करणत्वम्। स च स्वरूपा- प्रतिपत्त्यधीनः। स्वरूपं चैषामाग्नेयादीनां 'यदाग्नेयो ऽष्टाकपाल' [illegible] भिन्नभावमवगतमिति तदनुवर्तिनी साधनताऽपि भिन्नैव।

---

विषयत्वम्. २ पु० पा०

न चैवमन्योन्यनिरपेक्षाणामुपायभावः। यथाश्रुतकरणाऽ ना
परमाऽपूर्वस्य। बहूनि चाऽस्य करणानि श्रूयन्ते, इति नै नि
भवितुमर्हति। अनेककरणसाध्यत्वं चैकस्या अपि क्रिय
दृष्टमेव। यथाऽश्वेन दीपिकया खड्गपाणिभिरग्रेसरैः संचर
इति। अवान्तरव्यापारभेदादश्वादीनां साधनानां भेद णि
इहाप्युत्पत्त्यपूर्वाण्येवाऽवान्तरव्यापाराः। ते च प्रत्याग्नेयादि ानां
समानम्। एवं चाऽऽज्यौषधसांनाय्येषु न सङ्करो धर्माणाम् जन
प्रयुक्तत्वेऽप्यवान्तरव्यापारोत्पत्त्यपूर्वभेदेन साधनभावस्य भेना
निवेशितत्वाच्च तेषाम्। अन्यथा तदभेदे सङ्करप्रसङ्गात्। तस्मा
काराऽपूर्वोत्पत्तिसमये आग्नेयादीनामसतामपि शब्दाऽवगतत्वैक
मुत्पत्त्यपूर्वाण्यवान्तरव्यापाराः शक्तयो वा तथा फलं प्रत्यवगतत्वा
क्रियाया अवान्तरव्यापारः शक्तिर्वा अपूर्वं भविष्यति। कथोऽ
ऽन्यस्य शक्तिः, असति वा व्यापारवत्यवान्तरव्यापार इति चेत्मेव
दीनामपि परमाऽपूर्वसाधनानामवान्तरव्यापारेषु शक्तिषु दर्शि
तुल्यत्वात्पर्यनुयोगस्य। अनपेक्षशब्दाऽवगतसाधनभावनामाग्ने फ
भुवामन्यसमवेतान्यप्यसमानकालान्यप्युत्पत्त्यपूर्वाणि व्यापाराः अन्ध
चेत्? तत्किं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'-
साध्यस्वर्गवैशिष्ट्येन[1] क्रिया कार्या नाऽवगम्यते, स्वविशे षयि
प्रत्ययस्याऽनानुकूल्यम्, येन तद्घटनायाऽवान्तरव्यापारः
नाऽपूर्वमास्थीयेत?

फलसाधनसाधनं न फलसाधनं क्रियेत्यपि मिथ्या। वनि
तस्यास्तत्साधनत्वात्। यथा परमाऽपूर्वसाधनप्रवृत्तानामाग्ने, त
त्त्यपूर्वसाधनत्वम्; सस्यागमो[2]द्देशेन प्रवृत्तस्यैव कृषिकर्मणो तस
साधनत्वम्। न च परमाऽपूर्वं प्रत्युत्पत्त्यपूर्वाणामेव साधनत्वम्, पूर्वस
नामिति साम्प्रतम्। न हि दर्शपूर्णमासाभ्यामिति च यजेत
पूर्वाणामभिधानमपि तु षण्णामाग्नेयादीनां कालविशेषसं तत
नामनूदितानां समुदायिनाम्[3]। न चैषामुत्पत्तिवाक्यान्येव यन्तरा
पूर्वाणि प्रति कारणत्वमधिगमयितुमीशते। अधिकारवाक्यसापि
तानां तदुत्पत्तिवाक्यानामधिकाराऽपूर्वप्रत्यभिज्ञाशङ्कया द्राग् श
प्रत्ययाऽजननात्। उत्पन्नानूदितानां तु पश्चादाग्नेयादीनां

१. विशिष्टेन २ पु० पा०। २. सस्याधिगम २
३. समुदायानाम् २ पु० पा०।

नान्तरात्सिद्धिः ? न । मानान्तरविषयत्वेनाऽनपेक्षत्वसिद्धेः ।
नियोक्तृव्यापारो नियोगो न नियोक्तुर्विना अवकल्पते । न

त्रयकरण[1] भावानामपरस्परं सम्भवतां तदनुपपत्तेः । तत्सिद्धयर्थ-
णि कल्पितानि प्रत्ययवाच्यान्यपि कार्यरूपाण्यपि नाऽऽग्नेया-
ानां प्रधानं प्रति स्वकरणतामापादयितुमर्हन्ति । तैराग्नेयादिभिः
जनयितव्येऽवान्तरव्यापारतया तत्कल्पनात् । तथैव च लिङर्थ-
भेनात् प्राधान्याऽनुपपत्तेः । प्रधानद्वयसम्बन्धस्यैकत्र दुरधिगम-
। तस्माद्यथा तवाऽऽग्नेयादीनामुत्पत्त्यपूर्वाऽवान्तरव्यापाराणां परमा-
चैककृतिकर्म तथा विवृद्धं साध्यं प्रत्येक एव करणभावः, तथा
ऽवान्तरव्यापाराया एव क्रियाया अपि स्वर्गाऽनुकूलतेति साध्य-
कर्त्ताऽपि शक्त एव क्रियाकर्तव्यतामवबोद्धुम् । न च यो यत्कामः
मेव कार्य्यमवैति, नाऽनुपायमित्यस्यैकान्तिकत्वमिति निवेद-
दर्शितं च भावनाविवेके । कर्तृसमीहितोपायस्य कर्तव्यताज्ञाना-
फले चाऽप्रसङ्ग इत्युपरिष्टान्निवेदयिष्यते । तस्मान्न स्वर्ग-
सन्धान्मानान्तराऽपूर्वाऽभिधानसिद्धिर्लिङादीनाम् ।

...के माणवक ! सन्ध्यामुपास्वेत्याचार्यवचनाऽनन्तरं माणवकस्य
... तस्याश्च कार्याऽवगमाऽधीनत्वात्सन्ध्योपासनकर्मणश्च
...षयितु...: तदतिरिक्ते कार्ये मानान्तराऽवेद्ये लिङादेः सङ्गतिग्रह
निरू... क्रियाया एव कर्तव्यतोपपत्तेः । दुःखतयाऽनुपपत्तिरिति
...र्हि वरं तस्या एव हिताऽहितप्राप्तिपरिहारयोरन्यतरोपायता-
, तादृश्या एव तस्या आत्मनि प्रवृत्तिहेतोरुपलब्धेः तदेतदप्यति-
तस्मान्मानान्तराऽविषयत्वेनाऽपदार्थत्वाच्च नैव वाक्यार्थत्वं
पूर्वस्येति सिद्धम् ।
नियोगस्य पदार्थत्वलिप्सयाऽनभिमतमपि मानान्तरगोचर-
ततो मानान्तरविषयत्वेनाऽनपेक्षत्वं चोदनायाः स्यादित्याह—
न्तरात्सिद्धिः ? न । मानान्तरविषयत्वेनाऽनपेक्षत्वसिद्धेश्चोद-
पि च नियोग इति प्रवर्तनेति च प्रेरणेति च नियोक्तुर्व्यापारे
शब्दास्तं गमयन्ति । न चाऽसौ नियोक्तुर्विना अवकल्पते,
कार्यनिर्वृत्तेरित्याह—अपि च नियोक्तुर्व्यापारो नियोगो न
ना अवकल्पते । अस्तु तर्हि नियोक्तेत्यत्राह—न चाऽस्याऽस्ति

[1] ...गतकरण २ पु० पा० ।

**चाऽस्य सम्भवः, अपौरुषेयत्वाऽभ्युपगमात् । शब्दस्य पुरस्ता
कुर्विति तदपरामर्शादनन्यगोचरत्वम् । तद्यदि शब्दतो घटाद
न हि घटादिश्रुतयोऽपि भूतादीनामन्यतममामृशन्ति । अर्थाऽ
ऽसत्त्वं खपुष्पादिवत् । एतल्लक्षणत्वादत्यन्ताऽसत्तायाः ।
वर्तमानत्वादव्यभिचारः । यदीतरप्रतियोगिता वर्तमानता**

सम्भवः । ननु पुरुषो नियोक्ता भविष्यतीत्यत आह—अ
पगमात् । पुरुषाऽभावाद्वेदे । अस्तु तर्हि शब्दो नियोक्तेत्यत
पुरस्तात् प्रतिषेधात् । प्रमाणत्वादित्यादिना । यदपि प्रमाणा
परिवृत्त्यर्थविषयगोचरत्वात् कुर्विति तदपरामर्शात् कालत्र
रिष्यसि, अकार्षीः, करोषीत्यभिन्नार्थत्वप्रसङ्गादनन्यगोचर
शब्दतो घटादावपि मानान्तराऽगोचरत्वप्रसङ्गः । न हि घ
भूतादीनामन्यतममामृशन्ति । न हि घट इति भूतादी
घटोऽभूदस्ति भविष्यतीति प्रयोगसम्भवः । विरोधपौनरुक्त्य
चाऽपौनरुक्त्यमेवेत्यर्थः । अथाऽर्थतस्त्रैकाल्याऽनामर्शो, न
त्रात् । दूषयति—अत्यन्ताऽसत्त्वं खपुष्पादिवत् । यथा खपुष्प
भवन्ति न भविष्यन्ति तथा चेन्नियोगोऽपि न स्यात्तेभ्यो
ह्यत्यन्ताऽसत्ताया अन्यल्लक्षणम् । अतः कालत्रयविवेका
क्षणत्वादत्यन्ताऽसत्तायाः । कालाऽतिरिक्तस्य हि सत्
व्याप्तम्, स तदवच्छेदो[1] कालात्मनो नियोगान्निवर्त
निवर्तयति, निवर्तमाना वृक्षतेव शिंशपात्वमेकशिलाम
दित्यर्थः । ननु कालाऽतिरिक्ताः परमाण्वाकाशादयः सन्तो
ऽवच्छिन्नास्तस्माद्व्यभिचार इत्यत आह—नित्यानां च
व्यभिचारः । अतीताऽनागताभ्यां व्यपवृत्तयाऽस्तिक्रियया स्व
नियोगेन व्यवच्छिन्दन्त्या उपहितानां नित्यानां वर्तमानता
शङ्कते—यदीतरप्रतियोगिता वर्तमानता, न नित्येषु सा,
गतता कारणद्वारेणोपमृद्य भवति या च अतीततया स्व
द्वारेणोपमृद्यते,[3] सा वर्तमानता । न चेयं नित्येषु सम्
प्रध्वंसाऽभावाऽविनाभावितया नित्यत्वविरोधिनीत्वादित्यर्थः
भाषिकं वर्तमानत्वं न लोकसिद्धम् । अस्ति हि प्राक्प्रध्व

१. अतस्तदवच्छेदः पु० पा० ।
३. उपरममश्नुते २ पु० पा० ।
२. याचस्व २ पु०

**ष्टमपि तर्हि मानान्तरविषय इति व्यर्थः कालविवेकोपन्यासः । ग्राह्यता सत्त्वलक्षणम् । अतो नाऽत्यन्तासत्त्वम् । न । अभाव-**

दिषु वर्तमानतानिसर्गाऽनुभवो लौकिकानाम् विद्यते व्योमा-ऽस्ती[1]त्यादिप्रयोगदर्शनात् । न च भाक्तः प्रयोगः, विशेषाभावात् । ऽस्ति, विज्ञानमस्तीति विशेषोऽवगम्यते । अविशेषे अपि[2] क्तत्वकल्पने तदतिरिक्तस्यापि भाक्तत्वप्रसङ्ग इति । प्यत्र दूषणे स्थवीयसि दोषान्तरमाह—कालाऽसंसृष्टमपि तर्हि विषय इति व्यर्थो नियोगस्य कालविवेकोपन्यासः ।

न यदाहुः कारकव्यापारो हि कालत्रयाऽवच्छेद्यो नाऽधिकार इति, वेदितव्यम् । यथाऽव्यापारात्मतयाऽधिकारो नियोगः कार्य्यम्, संभिन्नः तथा घटादयोऽपि । न जातु तेऽपि व्यापारा[3] न च[4] गोचराः । तथाऽधिकारोनवच्छिन्नोऽपि कालेन मानान्तर-ादिति व्यर्थः कालविवेकोपन्यासः । ननु न कालसम्बन्धः सत्ता, स्ता, कालस्य तदसम्बन्धस्याऽसत्त्वप्रसङ्गात् । नाऽपि सामान्यम्, वे[5] तदनुपपत्तेः । यथा कालाक्षीमीक्षितवतः स्वस्तिमत्यां गवि हिमशैलादिषु च त्रसरेण्वादिषु च रूपादिषु चोत्क्षेपणादिषु मर्शः समस्ति एतेन द्रव्यत्वादयोऽपि प्रत्युक्ता वेदितव्याः । पि सत्ता, अपि तु प्रमाणग्राह्यता सत्त्वलणम् । सा च वच्छिन्नस्य कालस्येव नियोगस्याऽपि शास्त्रप्रमाणप्रयोगवेदनी-त नात्यन्ताऽसत्त्वम् ।

कुसुमादयस्त्वतीतसमस्तमानकर्मभावा अत्यन्ताऽसन्त एवेत्या-चोदयति—प्रमाणग्राह्यता सत्त्वलक्षणम्, अतो नाऽत्यन्ताऽसत्त्वं दूषयति— नाऽभावस्यापि प्रमेयत्वात् । न खलु प्रमेयता सत्ता, पि सत्ताया अभवाद् व्यावृत्तेः । यद्धि यस्मिन् अनुवर्तमाने व्यावर्तते व, यथा सूत्रात् कुसुमानि । सदसदिति च परस्परव्यावृत्ते प्रमेये । यदाहुः प्रामाणिकाः "सत् सदिति गृह्यमाणं यथाभूत-तत्त्वं सत् । असदसदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वमस-

---

१. स्मास्ति २ पु० पा० ।
२. तथापि २ पु० पा० ।
३. ादयोऽप्यव्यापाराः २ पु० पा० ।
४. न मानान्तरा णां मु० पा० ।
५. ऽवमर्शेन विना १ पु० पा० ।

कथम ? यदा नाऽभावः प्रमेयः कण्टकादीनामिति निरटङ्कि प्रते
स्यापि प्रमेयत्वात् । अभावः प्रमेय इति सुव्याहृतम् । नास्ति
ऽस्तीति व्यवहारः ? विषयावच्छेदात् । अवच्छिन्नविषयं हि
बोधयदन्यदनवबोधयन्नास्तीति व्यवहारयति । कथमन्यवि
ऽन्यविषयात्प्रमाणात् ? नाऽयमन्यविषयः । तस्य प्रमाणविषया
त्वात् । तस्या विषयान्तरत्वात् । तथा हि—नास्तीत्ययम

दि"ति । तदेतदसत्त्वेन नित्यं परस्परव्याकृत्तं सदसत्त्वं व्यच्
चोदकः सोपहासमाह—अभावः प्रमेय इति सुव्याहृतम्
दर्शयति—नास्ति प्रमीयते चेति कथम् ? न हि यथा द्रव्यगु
न्योऽन्यविलक्षणानि स्वभावभेदवन्ति च तद्भेदाश्चकासति त
ऽपि कश्चित् परस्परव्यावृतश्च स्वभावभेदवांश्चाऽनुभव एव च
सङ्गतो लोकस्तत्त्वालोकनात्, न पुनः पुरुषप्रवादमात्रम् ।
सम्भवेत् सवटयक्षवत् । तस्मान्नास्तीति व्यपदेशऽप्रमीय
ऽलम्बनो न पुनरभावं विग्रहवन्तं गोचरयति । तथा च
प्रमीयत इत्यर्थः । तस्य कथं प्रमीयत इत्यनेन सङ्गतिः ? वि
यद्येवमभावव्यवहारस्य भूतले कण्टकादि नास्तीति चरणन्या
प्रवृत्त्यात्मकस्य घटादि नास्तीति च निवृत्त्याऽऽत्मकस्य
वीजम् ? इत्याह । यदा नाऽभावः प्रमेयः कण्टकादीना
तर्हि तदानीं नास्तीति व्यवहारः ? उत्तरमाह—विषयाऽवच्
भूतलग्राहिणः । तदेव स्फोटयति—अवच्छिन्नविषयं हि प्रमाणमेक
न घटकण्टकादिसद्वितीयभूतलग्राहीति यावत् । तदवबोधयद्
वोधयत् घटकण्टकादि नास्तीति व्यवहारयति ।

तदेतद्विशदीकर्तुं शक्यते—कथमन्यविषयो व्यवहार
विषयोऽन्यविषयाद् भूतलादिविषयात् प्रमाणात् ? अभावव्य
सर्वजनीनो न निह्नवमर्हति, भावव्यवहारवत् । तदनेनाऽभाव
अन्यव्यवहारस्याऽन्यत उत्पत्तावतिप्रसङ्गादित्यर्थः । निराकर
विषयः । न व्यतिरिक्ताऽभावविषयः, तस्याऽभाववद् विग्र
किंविषयस्तर्हि ? इत्यत आह– तस्याऽभावव्यवहारस्य प्रमाण
विषयत्वात् ।

नन्वेवं विषयावच्छेदोऽपि भावरूपाद्विषयाद् भिन्न इति
विषयोऽयमभावव्यवहारः ? इत्यत आह—तस्या विषया

**ग्रते न घट इति । अतस्तत्राऽप्रमितिः प्रमाणमित्यलौकिकमिति ।**

**—अनिरूपितव्यवहारमत्रभवन्तं पश्यामः । इदं हि भवान्निरूपयतु, कानां क्वचिन्नास्तीति प्रवृत्तिनिवृत्तिलक्षणो व्यवहारः किमय- द, उताऽन्यपरिच्छेदात् उत तदभावपरिच्छेदात् ? यद्यपरि- ष्टस्याऽभावं जिज्ञासेरन्, अपरिच्छेदादेव निवर्तेरन्, अनिष्टस्या- देव प्रवर्तेरन् । प्रमाणविषयाऽपरिच्छेदनिबन्धन एव व्यवहारः । ऽभावात् । न हि तदितरयोरपरिच्छेदो विशिष्यते । अप्रत्यय-**

ाम भूतलभावाद् भिन्नः, किं तर्हि दृश्ये प्रतियोगिनि घटकण्ट- मात्रोलम्भः । स चैकाकिभूतलविषयः । यस्मिन्दिदृक्षिते यस्मिन् दृश्ये भवति[1] तस्याभाव उच्यते, प्रवर्तयति च तदभावव्यव- नु भवतु नामैतद्विषयोऽयमभावव्यवहारो नास्तीति व्यपदेशो भावाऽतिरिक्तमर्थमवलम्बिष्यत इत्यत आह—तथा हि । नास्ती- दं प्रतीयते, भूतलमेकाकि प्रतीयते । न घट इति व्यपदेशोऽपि ावच्छेदविषय एव, न निर्विषयः । प्रमाणविषयावच्छेदश्च तस्मादुपपन्न उपहास इत्याह—अतस्तत्राऽप्रमितिः प्रमाणं म् ।

षयितुमुपक्रमते—उच्यते । अनिरूपितव्यवहारमत्रभवन्तं निरूपणे त्वभावव्यवहारस्याऽनुपपन्नमेतदिति तन्निरूपणे इदं हि भवान्निरूपयतु, य एष लौकिकानां क्वचिन्नास्तीति लक्षणो व्यवहारः किमयमपरिच्छेदात्सर्वोपाख्याविरहलक्ष- न्यपरिच्छेदात्, उत तदभावपरिच्छेदात् ? तत्र प्रथमं कल्पं परिच्छेदात्, नेष्टस्याऽभावं जिज्ञासेरन् । किञ्चाऽपरिच्छे- र्तेरन् अनिष्टस्याऽपरिच्छेदादेव प्रवर्तेरन् । जिज्ञासमानोऽपि नैवाऽऽप्नुयात् । तदतिरिच्यमानदेहस्य प्रमेयाऽभावस्याऽनभ्यु- प्राप्त एवेति प्रेक्षावतामभावजिज्ञासा न स्यात् ।

—प्रमाणविषयाऽपरिच्छेदनिबन्धन एव व्यवहारः । नाऽपरिच्छे- वक्षितम्, अपि तु दृश्यस्य प्रतियोगिन इत्यर्थः । निराकरोति— ऽभावात् । तमेवाह—न हि तत्तदितरयोरपरिच्छेदो विशिष्यते । त्वेऽदृश्यत्वे वा प्रतियोगिनोरपरिच्छेदस्य प्रसज्यप्रतिषेधात्मनः वेरहिणः कश्चिद्विशेषः सम्भवति । तत्सम्भवे तु तुच्छत्वा-

---

[1] स्मिन् प्रतियोगिनि दृश्यं भवति २ पु० पा० ।

पूर्विके च प्रवृत्तिनिवृत्ती इत्यसमीचीनम्[1] ।

वस्त्वन्तरप्रत्ययात् प्रवर्तन्ते निवर्तन्ते चेति मिथ्या प्रतियोगिनस्तत्प्रसङ्गात् । भावे घटकण्टकयोर्ज्ञायमानयोः प्रवृत्तिनिवृत्ती[2] । हन्त तर्हि तदभावाद्विपर्ययः, न वस्त्वन्तरभा ऽनिष्टसाधनज्ञानस्य तदापि भावात्पुरस्ताच्च ।

दूषणान्तरमाह—अप्रत्ययपूर्विके च प्रवृत्तिनिवृत्ती इ न खलु गगनकुसुमायमानस्तुच्छोऽपरिच्छेदः प्रत्ययः कार वा सम्भवति । ततश्चाऽपरिच्छेदात् प्रेक्षावत्प्रवृत्तिनिवृत्ती ब्रु कत्वं वा तयोरविज्ञानपूर्वकत्वं वा वाचोयुक्त्यन्तरेणाऽभिदधी त्वप्रेक्षावत्प्रवृत्तिनिवृत्तित्वयोरनुपपत्तेरित्यर्थः ।

ननूभयी भूतलादौ संवित्, सद्वितीयभूतलविषया चैका चेति । उत्तरा ऽपि च द्वयी, दृश्ये प्रतियोगिनि अदृश्ये च । पलम्भाय[3] प्रत्ययान्तरसाकल्यं, स्वभावविशेषश्च । स च उच्यते । यस्मिन्सति सत्स्वन्येषूपलम्भप्रत्ययेषु सद्भावोऽनुभूय दृश्ये प्रतियोगिनि भूतलप्रतीतिः सैवाऽभावव्यवहारसाधनी ऽतुच्छत्वात् सम्भवति विशेषणयोगः । तत्सिद्धयर्थं च युज्यते कादिजिज्ञासेत्यत आह—वस्त्वन्तरप्रत्ययात् प्रवर्त्तन्ते चेति मि भावेऽपि प्रतियोगिनो घटादेर्भूतलादौ तत्प्रसङ्गात् । घटो ना कण्टको नास्तीति प्रवृत्तेः प्रसङ्गात् ।

शङ्कते—भावे घटकण्टकयोर्ज्ञायमानयोस्तन्निबन्धने निवृत्ती; न भूतलज्ञाननिबन्धने । निराचष्टे—हन्त तर्हि कण्टकयोरभावाद्विपर्यय इष्टाऽनिष्टसाधनज्ञानस्य घटकण्टक भूतलभाव एव कस्मादिष्टाऽनिष्टसाधनज्ञानविपर्ययहेतुर्न आह—न वस्त्वन्तरभावात् । न भूतलभावादिष्टाऽनिष्टसाध कस्मात् ? तदाऽपीष्टाऽनिष्टसाधनज्ञानस्य समयेऽपि भाव एतदुक्तं भवति । यदीष्टाऽनिष्टसाधनज्ञानविरोधो भूत ततस्तस्मात्तदनङ्क्ष्यत्[4] न त्वनयोर्विरोधः । तज्ज्ञानसन्त चिरमवस्थितेरिति ।

---

१. इत्यसमीचीनम् इति नास्ति मू० पु० । २. वस्त्वन्तरेत्यादि
३. उपलम्भतः २ पु० पा० ।
४. तस्मादत्वभवि

ष्टसाधनज्ञानाऽसहभुवोऽपि भूभागस्य तज्ज्ञानविपर्ययविरोधिता-
पुरस्ताच्च । भूतलस्य भावात् । इष्टाऽनिष्टसाधनज्ञानस्य
नस्य पुरस्तात्तदभावे दृश्यमानं भूतलं न तत्सहभावनियतमित्यर्थः।
माकूतम् । योऽयमभावव्यवहारो लौकिकानां घटो नास्तीति
ः, कण्टको नास्तीति प्रवृत्तिलक्षणः, स न तावद् दृश्ये घटकण्ट-
ागग्रहनिबन्धनः, दृश्यमानेऽपि तद्गते घटादौ प्रसङ्गात् । न
दृश्यमानत्वात्[1] । केवलभूभागग्रहणनिबन्धनत्वादयमदोष इति
नरस्य कैवल्यम् ? स्वरूपमिति चेत् । न । घटकण्टकादिग्रहे ऽपि
। तद्धर्म[2] इति चेत् ? स तर्हि घटादिभावविरोधी भूमिकान्तरेण
ति सिद्धं नः समीहितम् । नन्वभावप्रमेयवादिनामपि भूतल-
ज्ञानकारणमेषितव्यम् । यदाह—"गृहीत्वा वस्तुसद्भावं स्मृत्वा
गिन"मिति । तत्र न तावत् संसृष्टभूतलग्रहस्तद्धेतुर्विरोधात् । न
म्भवः, घटसंसृष्टभूतलग्रहश्च तत्र घटाऽभावनिश्चयश्चेति ।
भाववद्भूतलग्रहः । आत्माश्रयप्रसङ्गात् । न खलु स एव तस्य
म्प्रतम् । तस्माददृश्ये प्रतियोगिनि घटादौ भूतलमात्रग्रहणं
रेच्छेदहेतुरित्यकामेनाऽपि घटाभावादन्यत् कैवल्यं भूतलस्य
म् । तदेव चाऽभावव्यवहारनिबन्धनमिति किमन्तर्गडुना घटा-

दयुक्तम् । वस्तुसद्भावग्रहणमात्रस्याऽभावज्ञानहेतुत्वाऽनभ्युपग-
तु तुल्योपलम्भयोग्यस्य प्रतियोगिनोऽनुपलम्भने सत्यस्य तत्का-
ते । तदाह—स्मृत्वा च प्रतियोगिनमिति । अनेनागृह्यमाणतामस्य
तत्त्वे स्मृत्यनुपपत्तेः । न चैकज्ञानसंसर्गिभूतलोपलम्भ एव घटा-
ति साम्प्रतम् नोपलब्धचरघट[4]संसृष्टभूतलोपलम्भेऽपि घटाऽनु-
ात् । तदाऽपि भूतलोपलम्भस्य भावात् । घटाऽनुपलम्भस्य च
ात् । नन्वयमनुपलम्भः प्रतीतो वा स्यादभावज्ञाने हेतुरप्रतीतो
तावत् प्रतीतोऽनवस्थाऽऽपातात् । सोऽपि ह्युपलम्भाऽभाव-
म्भान्तरेण प्रमातव्यः, एवमनुपलम्भान्तरमपीत्यनवस्थानात् ।
तु सत्तया हेतुः स्यात् । तथा च यदाऽयं प्रमाणोपलम्भचरचत्वर-
साऽभावात् तस्मिन्नप्रतीतचरे चैत्राऽभावं त्वचिरप्राप्तचैत्र-
त्वरतलोपलम्भवान् पृच्छ्यते मैत्र ! प्राक् किमासीदिह चैत्र इति

---

१. न ह्यदृश्यो दृश्यमानः २ पु० पा० । २. तद्धर्म्य० २ पु० पा० ।
प्रयोगिनम् मु० पा० । ४. साम्प्रतं घट २ पु० पा० ।

स तदा तत्प्रश्नसमुदितजिज्ञासः प्राक्तनीं दृश्यमानस्य चैत्रस्याऽसत्तां तदानीमेवाऽवधार्योत्तरमाह, आयुष्मन्नासीदिह चैत्रः सम्प्राप्त इति।

तन्नोपपद्यते। तदानीन्तनेनोपलम्भेन तदनुपलम्भाऽपवादात्। न च प्राक्तनोऽनुपलम्भस्तस्य सम्प्रतितनीमभावधियमाधातुमर्हति। न खलु निमीलितनयनयुगलः प्राच्या नयनसत्तया सम्प्रति रूपं पश्यति। तस्मादेकज्ञानसंसर्गवस्त्वन्तरोपलम्भ एवाऽभावज्ञानकारणमेषितव्यम्। तथा च स्वसंवेदनसिद्धः स एवाऽभावव्यवहारसाधनाय पर्याप्त इति कृतमभावेन प्रमेयेनेति।

· अत्रोच्यते। न तावद्विना घटाऽनुपलम्भम् भूतलोपलम्भमात्रमभावव्यवहारसाधनम्। न च भूतलोपलम्भ एव तदनुपलम्भ इति चोक्तम्। अतोऽनुपलम्भो वरं[1] प्रतियोगिन एषितव्यः। न चाऽसावप्रतीतस्तदभावव्यवहारसाधनम्, प्रेक्षावद्व्यवहारस्याऽबुद्धिपूर्वकत्वाऽनुपपत्तेः। तदभावज्ञानसाधनं तु भवेत्। अज्ञातस्याऽपि ज्ञानोपायत्वदर्शनाच्चक्षुरादिवत्।

नन्वेवं सत्तामात्रेणोपायत्वमभ्युपेतं भवति। तच्चाऽनुपपन्नम्। असत्यनुपलम्भे तदभावबुद्धिसमुत्पादप्रसङ्गादित्युक्तम्। न। अनुपलम्भाऽभावस्याऽसिद्धेः। नन्वत्र चत्वरतले किमयमासीच्चैत्र इति प्रश्नसमये तदुपलम्भमानः स एव मैत्रः[2] कथं तदुपलम्भवान्? सत्यम्, गृह्णाति चैत्रम्, न तु स्मरत्यस्य प्राक्तनीं तत्र सत्ताम्, चत्वरतलस्येव। न च स्मृतिरनुपलम्भ इति तदभावोऽप्यनुपलम्भ एव। तेन यथा ग्रहणार्हस्याऽग्रहणं[3] तदभाववीक्षासाधनम्[4], एवं सत्यपि सम्प्रति तस्य ग्रहणे प्राक्तनी चैत्रस्य सत्ता चत्वरस्येव तत्र मध्यन्दिने स्मरणार्हा न स्मर्यत इति माध्यन्दिनस्मरणाऽभावः सन्निति प्राक्तनाऽभावविषयं माध्यन्दिनं प्रत्ययं शक्त एव जनयितुम्। न च प्रत्यक्षाऽनुपलब्धिरेवाऽभावज्ञानसाधनमिति साम्प्रतम्। योग्यप्रमाणाऽनुपलब्धेस्तत्साधनत्वात्। अतत्साधनत्वे त्वनुमानादिनिवृत्तेः। मकरगतस्य सवितुर्मीनादिषु सत्तायाश्च चैत्यवन्दनादिधर्मतायाश्च दर्विहोमाऽपूर्ववत्त्वस्य च ध्वन्यागमनमात्रोपपन्नश्रवणशब्दस्य सजातीयपरम्परारम्भणस्य निवारणाऽभावात्। प्रमाणान्तराणामिवाऽप्रमाणस्याऽपि स्मरणस्य स्वविषये योग्यत्वोपपत्ते। प्रत्ययान्तरसाकल्यलक्षणस्य च दृश्यत्वस्य विषयकारणक एव प्रत्यय उपपत्तेः। तदभावे चाऽनुमानादिनिवृत्तेरनुमेयाद्यभावसाधनत्वात्।

---

१. अपरः २ पु० पा०। २. तदुपलम्भवानेव मैत्रः २ पु० पा०। ३. ग्रहणादियोग्यग्रहणं २ पु० पा०। ४. अभावसाधनं २ पु० पा०।

न ह्यनुमानाद्येकविषयाणां प्रमेयाणां क्वचिदभावस्तद्व्यवहारो वा विषयाऽतिरिक्तप्रत्ययान्तरसाकल्ये सम्भवति। तस्मिन् सति सद्विरोधिभावप्रत्ययव्यवहारोपपत्तेः न च विषयकारणेऽपि प्रत्ययान्तरसाकल्यसम्भवः। इन्द्रियार्थसन्निकर्षस्यैवाऽसत्यर्थेऽनुपपत्तेः। तस्मात्संस्काराऽभावेऽपि स्मरणाऽर्हत्वमुपपन्नम्। न चोपलम्भाऽनुपलम्भयोर्विरोधः, असमसमयवृत्तिभावाऽभावसाधनतया भिन्नविषयत्वात्।

स्यादेतत्। सत्तामात्रेणाऽभावसाधने त्वनुपलम्भस्य दृश्यत्वमप्यस्य तथेति तज्ज्ञानसिद्ध्यर्थं सूक्ष्मकीटकण्टकादिजिज्ञासा न स्यात्। मैवम्। दृश्यत्वसिद्ध्यर्थं हि सा। अजिज्ञासितस्य तत्त्वाऽनुपपत्तेः। न तु दृश्यत्वज्ञानार्थम्। भवतु वा दृश्यत्वज्ञानं हेतुः, भूतलज्ञानवत्, किमायातमनुपलम्भस्य? न ह्यालोको ज्ञायमानः कारणमिति चक्षुषाऽपि तथा भवितव्यम्। न च धूमोऽवगतोऽनुमानज्ञानकारणमिति मनोऽपि तत्कारणं ज्ञातव्यम्। तस्मात्सत्तयाऽनुपलम्भोऽभावज्ञानकारणमिति नाऽनवस्था। नाऽपि प्रमेयाऽभावाऽतिरिक्तकैवल्याऽङ्गीकारः। चत्वरतलोपलम्भस्य चैत्राऽनुपलम्भे सति तत्कारणत्वात्। तदयमभावव्यवहारो वस्तुसद्भावग्रहणतत्प्रतियोगितत्स्मरण[1]तद्बुभुत्साऽतिरिक्तनिमित्तजन्मा। यथा सत्स्वपि तन्तुषु कदाचित्पटः प्रादुर्भवंस्तदतिरिक्ततत्संयोगभेदजन्मेति। दृश्ये प्रतियोगिनि स्मर्यमाणे वस्तुसद्भावग्रहणे सत्यभावव्यवहारो ऽवश्यम्भावीति हेतुरसिद्ध इति चेन्न। गृह्यमाणेऽपि प्रतियोगिन्यस्मर्यमाणे किमासीदिति प्रश्नाऽनन्तरं प्राक्तनतदभावव्यवहारप्रवृत्तेः। भवतु तर्हि बुभुत्सिते प्रतियोगिनि बोधार्हे वस्तुसद्भावज्ञानमभावव्यवहारसाधनम्। अस्ति च गृह्यमाणे चैत्रे किमासीदिति प्रश्नसमनन्तरं तत्र तदीयप्राचीनसद्भावसुस्मूर्षा। तदेतस्यां सत्यां प्राक्कालवर्तिचत्वरतलस्मृतिरेवाऽवश्यं तदभावव्यवहारप्रवृत्तिनिमित्तमित्यसिद्धता हेतोः। न। एतस्यामप्यवश्यम्भावनियमाऽभावात्। प्रतीतिस्मरणाऽनुभवयोः सतोरपि नितान्तवल्लभ्यतया सुस्मूर्षाऽनुबुभूषयोरविरामात्[2]। तथा च प्रतियोगिनोऽनुभवे स्मरणे च तत्र तत्र तदभावव्यवहारप्रसक्तेः। असंस्मरणेऽननुभवे चेति विशेषणान्न दोष इति चेत्? अङ्गीकृतं तर्हि तदतिरिक्तं निमित्तमभावः। तथाप्युपलम्भाऽभावरूपत्वादस्य न प्रमेयाऽभावसिद्धिरिति चेत्। अत्रोत्तरमनन्तरमेव वक्ष्यति स्वयमेवाऽऽचार्यः।

नन्वभावो नाम विग्रहवान्न कश्चिदनुभूयत इत्युक्तम्, तत्किमयमभावव्यवहारो नास्ति, नास्ति निमित्तो वा? न तावन्नास्ति निमित्तः। कादा-

१. द्रव्यस्मरण २ पु० पा०। २. अधिगमात् २ पु० पा०।

तस्मान्नाऽन्यप्रमितिनिबन्धने नाप्यप्रमितिनिबन्धने अनभिमतमभिमतं नास्ति, अभिमतं नास्तीति प्रवृत्तिनिवृत्ती, अपि त्वभावाऽधिगमनिबन्धने। नास्तिज्ञानस्य को विषयो निरूपितः? ननूक्तम्, किमपराद्धं भवतो विषयाऽभावेन? यत्तमतिलङ्घ्य प्रमाणाऽभावो विषय इत्युच्यते। ज्ञेयाऽभावो न

चित्कत्वाऽनुपपत्तेः। न च निमित्तान्तरमस्याऽस्तीत्युक्तम्। न च नास्ति, भावव्यवहारस्याऽपि अपह्नवप्रसङ्गादित्युक्तम्। निःस्वभावस्य कथमनुभूयमानता? इति चेन्न। सद्व्यावृत्तिरूपस्य तस्य प्रतीयमानत्वात्स्वतोऽवान्तरविशेषाऽनुपलब्धेः। निःस्वभावतेति चेत्? न। ज्ञानशक्त्यादीनामपि तत्प्रसङ्गात्। तेषामपि हि न स्वतो भेदो निरूप्यते। ज्ञेयशक्य[1]भेदाऽधीनं तद्भेदनिरूपणमिति चेत्? न। इहापि प्रतियोगिभेदेन तद्भेदनिरूपणादिति सर्वमवदातम्।

प्रकृतमुपसंहरति—तस्मान्नाऽन्यप्रमितिनिबन्धने नाऽप्यप्रमितिनिबन्धनेऽनभिमतं नास्ति, अभिमतं नास्तीति प्रवृत्तिनिवृत्ती, अपि तु पारिशेष्यादभावाऽवगमनिबन्धने। न केवलं व्यवहाराऽन्यथानुपपत्तेरभावसिद्धिः, अपि तु घटोऽस्तीति ज्ञानवत्तदभावज्ञानमप्यवगम्यते। न च ज्ञानं निरालम्बनमिति निवेदयिष्यते। तदस्याऽऽलम्बनं नाऽभावादन्यदस्तीत्याशयवान् पृच्छति—नास्तिज्ञानस्य को विषयो निरूपितः? अपर आह—ननूक्तम्, नेदमिह प्रतीयत इत्यर्थः।

तत्र न तावददृश्ये[2] प्रतियोगिनि वस्तुसद्भावज्ञानम्, प्रतियोगिनोऽप्यप्रमितिः सम्भवतीत्युक्तम्। अतस्तद्व्यतिरिक्ताऽनुपलम्भाऽभावो वक्तव्यः। तथा च किमपराद्धमत्रभवतो विषयाऽभावेन? यत्तं प्रमीयमाणमतिलङ्घ्य प्रमाणाऽभावो विषय उच्यते।

शङ्कते—प्रातिस्विकभेदाऽनुपलब्धेर्ज्ञेयाऽभावो न प्रमेयः। निराचष्टे—भवतु यद्यस्ति ज्ञानज्ञेयाऽभावयोर्विशेषः। न हि ज्ञानाऽभावोऽप्याजानतो भेदवान्। तद्भेदस्याऽपि प्रतियोगिभेदाऽधीननिरूपणत्वात्। तथा च चैत्रो नास्तीति प्रतीतिस्तदभावाऽवभासलक्षणकार्यसमधिगमनीया, न कुकविकृतिरिव क्लेशेन कथंचित्प्रमाणाऽभावविषयतया व्यख्यातुमुचिता। अथापि वैजात्यात् उच्यते, न च तत्त्वतो नास्तीति बुद्धिव्यवहारौ स्तः, किन्तु

१. शक्त्य मु० पा०। २. दृश्ये २ पु० पा०।

**प्रमेयः। भवतु यद्यस्ति तद्विशेषो हेतुः। ज्ञानाऽभावे ज्ञानभ्रमो व्यवहाराऽभावे व्यवहारभ्रमः। आलोकाऽदर्शनेऽन्धकारभ्रमवत्।**

**न। सुषुप्त्याद्यवस्थासु प्रसङ्गात्। अप्रमिते च भ्रमाऽयोगात्सुषुप्त्यादिवत्।**

चैत्रदर्शनाऽभावे चैत्रो नास्तीति ज्ञानं भ्रमः, चैत्रोचितव्यवहाराऽभावे व्यवहारभ्रमः।

अत्रैव निदर्शनमाह—आलोकाऽदर्शनेऽन्धकारभ्रमवत्। न किलाऽन्धकारो नाम तत्त्वतोऽस्ति, तत्प्रत्ययो वा। तथा हि तद् द्रव्यादीनामन्यतम[1]मेव भवेत्। तैरेव विश्वस्य सङ्ग्रहात्। तत्र द्रव्यत्वे तमःपृथिव्यादीनामन्यतममन्यद्वा ? न तावदन्यतमम्। क्षितिसलिलात्मसु चतुर्दशगुणेषु, तेजसि चैकादशगुणे, मातरिश्वनि च नवगुणे, मनसि चाऽष्टगुणे, नभसि च षड्गुणे, दिक्कालयोश्च पञ्चगुणयोरविनाशिनोरनन्तर्भावात्। अन्तर्भावे वा तावद्गुणत्वप्रसङ्गान्नित्यत्वापत्तेश्च। नाऽपि द्रव्यान्तरम् निर्गुणस्य तत्त्वाऽनुपपत्तेः। नीलोत्पलपलाशश्यामलमुपलभ्यमानं महच्च तमो न निर्गुणम्। अतो द्रव्यान्तरमिति चेत् ? न। कृष्णरूपस्य[2] गन्धाद्येकार्यसमवायिनस्तद्व्याप्तस्य तदभावेऽभावात्। तथा च निखिलगुणविरहिणो न द्रव्यत्वम्। गुणकर्मसामान्यभावोऽप्यनाश्रयस्य न सम्भवति। न च पृथिव्यादिद्रव्यमस्याश्रयः। तदाश्रयत्वे तद्गुणानां तत्सहचरितानामुपलब्धिप्रसङ्गात्। न चास्य तमस उपलब्धिरुपपद्यते। उपलम्भकाऽभावात्[3]। न चेन्द्रियाणामेतत्तमो लोचनं गोचरयति। तदभावे तदनुपलब्धिप्रसङ्गात्। अस्ति च निमिलितलोचनस्याऽपि तमः पश्यामीत्यभिमानः। घ्राणादीनां गोचरस्तम इति स्थवीयः। मनोऽपि चाऽऽन्तरगोचरनियतं बहिरसतीन्द्रियलिङ्गादौ दवीय एव। न च कारणाऽभावे कार्यमुत्पत्तुमर्हति। तस्याऽऽकस्मिकत्वेन कादाचित्कत्वाऽनुपपत्तेः। तस्मान्न तमो नाम किञ्चिदस्ति वस्तु। नापि तज्ज्ञानम्। अथ च तमस्तमालनीलमुपलभामह इत्यभिमानो लौकिकानामालोकाऽदर्शने। सोऽयं विप्लवः। एवमभावदर्शनं तद्व्यवहारश्च विप्लव एवेति भावः।

तदेतन्निराकरोति—न। सुषुप्त्याद्यवस्थासु प्रसङ्गात्। यदि हि ज्ञानव्यवहारयोरभावे तद्विभ्रमः, सुषुप्त्याद्यवस्थास्वपि तथा प्रसङ्गः। न हि तदा ज्ञानं, नाऽपि व्यवहारः। समस्तविज्ञानोपसंहृतिलक्षणात्वात्सुषुप्त्याद्यवस्थायाः। हेत्वन्तरमाह—अप्रमिते च भ्रान्त्ययोगात् सुषुप्त्यादिवत्।

---

१. अन्यतमदेव १ पु० पा०। एवमग्रोऽपि। २. रूपस्य तदभावे का० वि०।
३. उपलम्भसाधनाऽभावात् २ पु० पा०।

**तमोदर्शनं तु भूच्छायादर्शनम् ।**

प्रमितस्य हि भावस्य प्रमित एव भावे समारोपभ्रान्तिर्न पुनरसतो नापि ज्ञानाऽऽकारस्य, नाप्यग्रह इत्युपपादितं विभ्रमविवेके। अत्रापि सूचयिष्यति । न च ज्ञान्नयवहाराभावौ क्वचिदुपलब्धपूर्वौ । तदुपलम्भे वा कृतमत्र भ्रमोपन्यासेन । तस्मादप्रमिते भ्रान्त्यनुपपत्तेरयुक्तमेतदित्यर्थः ।

दृष्टान्तस्तु साध्यविकल इत्याह—अत एव तमोदर्शनं तु भूच्छाया-दर्शनम् । अयमत्राऽभिसन्धिः । प्रमीयते तावत्तमस्तमालमालाश्यामम् । न चाऽप्रमितावेव प्रमितिविभ्रमसम्भवः । न चास्य बाधकमस्ति प्रमाणम् । न च तदभावे प्रमीयमाणमपह्नवमर्हति । अतिप्रसङ्गात् । न च तमसः प्रमाणाऽनुपलब्धेः प्रमा प्रथमानाप्यपह्नोतुमुचिता । रूपाद्युपलब्धेरपि तत्प्रसङ्गात् । न हि तत्प्रमाणमिन्द्रियाद्युपलभ्यते । रूपाद्युपलब्धिलिङ्गक-मनुमानमस्योपलब्धिरिति चेत् ? न । इहापि समानत्वात् । ननु चक्षुरादि-गोचरत्वमस्येत्युक्तम् । तर्हि वरमस्तु तमसि समस्तजनसाक्षात्काराऽऽस्पदे प्रमितिकार्यदर्शनात् प्रमाणान्तरमनुपलब्धपूर्वमपि, न पुनस्तस्याऽन्यतो-ऽनुपलम्भात् स्पष्टदृष्टकार्यविपर्ययो युज्यते । अस्तु वा चक्षुरेवाऽस्य कारणम् । न च निमीलिताक्षस्य पटलवतो वा तन्नास्ति, अपि तु पिहितम् । कथं तर्हि पिहितं[1] घटादाविव बाह्ये तमसि प्रवर्त्तेतेति चेत् ? मा प्रवर्त्तिष्ट । किन्नश्छिन्नम् ? परिच्छेत्स्यति हि तच्छायां पक्ष्मणोः पटलस्य वाऽत्यासन्नामपि पिधातृणी पटलपक्ष्मणी पिदधतीं तामेवेक्षते चक्षुः, न तु पटलपक्ष्मणी । आलोकाप्यायितं तत्पृथिव्यादिग्रहे प्रभवति, न तु तच्छा-यायां तद्विरोधिन्याम्, केवलस्यैव तत्र सामर्थ्यात् । कार्यदर्शनोन्नेयत्वात्तस्य सूक्ष्ममपि चेषीकतूलादि चक्षुराच्छादकमासन्नमनुभूयमानमतिमहदनवधि चकास्ति तथेयमपि । न चाऽन्धानामितरगात्राऽवयववद् गोलकाधिष्ठाने तत्कार्योपलम्भसम्भवः । तद्भावे वा वरमुपलम्भकान्तरकल्पनेत्युक्तम् ।

कतमत्पुनर्द्रव्यादीनां तमः ? ननु द्रव्यमेव, कालिमगुणशालित्वात् स्पन्दवत्त्वाच्च । तथा हि । कालिमैवाऽस्य रूपमुपलभ्यते । अप्तेजसोरिव श्वेतिमा । एवं संख्या ऽप्येकत्वादिका परिमाणम्, तच्चतुर्विधम् । पृथिव्या-द्यणूनामिव तमोऽणूनामप्यनुमानात् । पृथक्त्वसंयोगविभागपरत्वाऽपरत्व-संस्काराश्च पञ्चविधमपि कर्माऽध्यक्षमीक्षते । यथाहाऽत्रभवान्वार्तिककारः ।

---

१. कथमपि हितं २ पु० पा० ।

न नु नाऽभावमात्रस्य तमस्त्वं वृद्धसंमतम् ।
छायायाः कार्ष्ण्यमित्येवं पुराणे भूगुणश्रुतेः ॥
भूगुणस्य कार्ष्ण्यस्य च्छायायां द्रव्यान्तरश्रुतेरित्यर्थः ।
दूराऽऽसन्नप्रदीपादिदेहचेष्टाऽनुसारिणी ।
आसन्नदूरदीपादिमहदल्पचलाऽचला ।
देहानुवर्त्तिनी च्छाया न वस्तुत्वादिना भवेत् ॥ इति ।

न च पृथिव्यादीनामन्यतमम् । न तावत्कृष्णरूपस्य तमसस्तोयादिभावसम्भवः । तोयतेजसोः सितत्वादेवं पवनादीनां चाऽरूपत्वात् । न च परोपधानात् कालिन्दीसलिलस्येव तमसः कालिमेति साम्प्रतम् । अनुपहितस्य कदाचिदपि स्वाभाविकरूपान्तरशालिनोऽनुपलब्धेः, क्षेत्रसमुद्भूतस्येव कालिन्दीवारिणः स्वभावस्वच्छधवलस्य ।

नापि पार्थिवं तमः । तद्गुणानां गन्धादीनामभावात् । ननु तथैव गन्धादिव्याप्तं कृष्णमपि रूपं तन्निवृत्तावसदित्युक्तम् । तत्कि पवनेऽनुष्णशीतस्पर्शोऽसन्नेव ? गन्धादिव्याप्तस्य तस्य पृथिव्यामुपलब्धेः । पवने च तेषामभावात् । पाकजस्य स्पर्शस्य गन्धादिव्याप्तत्वम् । अयं त्वपाकजः स्पर्शो वायवीय इति चेन्न । इहापि साम्यात् । न हि तमसोऽपि कालिमा पाकजः । प्रत्यक्षं चोभयत्राऽपि समानम् । तमःपरमाणवश्च पार्थिवादिपरमाणव इव द्व्यणुकादिक्रमेण महान्तं तमोऽवयविनं पार्थिवमिवारम्भन्ते । तच्च रूपविशेषे सत्यनेकद्रव्यत्वान्महत्त्वाद्वा चाक्षुषमिति न तदुत्पत्त्यनवक्लृप्तिः । न च तस्य दिवाऽऽरम्भसम्भवः शाश्वतिकविरोधे सति तेजसि । न जातु स्पर्शवद्वेगवन्मुद्गरादिघाते परिपन्थिनि कुम्भारम्भाय भवन्ति मृदवयवाः बिभ्रति वा कुम्भमारब्धमिति । अत एव हि दिवापि निरस्ततेजसि गिरिगुहायामारभन्ते एव ।

स्यादेतत् । न तामसः परमाणवो ऽवयविनमारभन्ते । स्पर्शविरहादात्ममनो व्योम[1]वत् । न चाऽऽरम्भे रूपवत्त्वं प्रयोजकम् । अरूपाणामपि पवनपरमाणूनां स्पर्शवद्द्रव्यारम्भदर्शनादस्पर्शानां चाऽऽत्ममनसां तदभावात् । तत्किमत्र भवतां तमःपरमाणवः सन्ति न वा ? सन्ति चेत्कथन्तदवयविनामभावः ? तद्भावलक्षणत्वात् परमाणुभावस्य । असत्त्वे वा तमःपरमाणूनां कथं न हेतोराश्रयासिद्धिः ? हेतोरस्पर्शस्याऽसद्रूपत्वादसदाश्रयत्वमदोष इति चेन्न । तुच्छस्याऽहेतुत्वात्कल्पनारोपिततद्भावस्य च वस्तुनोऽसाधकत्वात्[2] ।

१. आत्ममनःस्तोम १ पु० पा० । २. वस्तुतत्त्वाऽसाधकत्वात् २ पु० पा० ।

न जातु समारोपितधूमभावा मिहिका[1] कृशानुसाधनं भवति। प्रामाणिकस्य त्वभावस्य भावाऽधिकरणमन्तरेणाऽयोगात्। तमःपरमाणुष्वसत्स्वाश्रयाऽसिद्धतया भवत्यसिद्धिः, न तु स्वतोऽप्रसिद्धस्य सत्यामपि परप्रसिद्धौ साधनाङ्गत्वम्, स्वयमप्रतीतस्य परप्रत्यायनाऽनर्हत्वात्। यथोक्तम्।

योऽपि तावत्पराऽसिद्धः स्वयंसिद्धोऽभिधीयते।
भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रियेति॥

अपि चाऽस्पर्शस्य द्रव्याऽनारम्भकत्वेन न स्वाभाविकः संवन्धो मनसः शक्यो निश्चेतुं, वैय[2]र्थ्यस्योपाधेर्विद्यमानत्वात्। धर्माऽधर्मनिमित्तत्वाद्विश्वकार्यनिर्माणस्य। साक्षात्पारम्पर्येण च सर्वं कार्यजातं भोगसाधनं सत्तन्निर्माणं स्यात्। न च मनोऽवयविनः शरीरतया विषयतया वा भोगसाधनता सम्भवति। इन्द्रियाऽनधिष्ठानतया देहभावाऽभावात्। अपार्थिवस्य च तद्भावाऽनभ्युपगमात्। विषयभावस्त्वननुभूयमानतयाऽनुपपन्नः। इन्द्रियभावस्त्वणुत एव मनसः। तमसस्तु रूपवतो विषयभावेन भवति भोगसाधनत्वमिति न वैयर्थ्यम्। परममहतां पुनरसमवायिकारणसंयोगविरहादधिकपरिमाणकार्यद्रव्याऽनुपपत्तेश्च कारणसमानन्यूनपरिमाणकार्याऽदर्शनाच्चवाऽधिक्याऽयोगाच्च परममहत्त्वव्याघाताच्च न स्वसमवायिद्रव्यारम्भकत्वमिति सोऽयमुपाधिः। न चौपाधिकः सम्बन्धोऽनुमानाङ्गम्। मा भूदुपाध्यायदर्शनादसकृदवगतसहभावस्याऽनुमानं शिष्यस्य। न चाऽनन्यथासिद्धे नीलाऽन्धकाराऽनुभवे परिपन्थिनि स्फुरति प्रत्यक्षे वाधितविषयमनुमानमुदेतुमुत्सहते। मा भूदनुष्णत्वं तेजसो द्रव्यत्वात्पृथिव्यादिवदित्यनुमानम्, द्रव्यान्तरस्य च द्रव्यान्तराश्रयत्वं दृष्टम्। तद्यथा आकरजस्य तेजसः सुवर्णादेः पार्थिवद्रव्योपष्टम्भः, अन्यथा पतनादि न भवेद् गुरुत्वाऽभावात्। यथा चाऽभिजातमहानीलादिमणिसमाश्रयं तेजः न च तद्वदेतद् भ्रमणत[3]स्तेज इति साम्प्रतम्। तेजसस्तदाश्रयस्याऽन्ततः खद्योतादिगतस्यापि कयाचिन्मात्रया रूपप्रकाशनव्याप्तत्वात्तमसश्च तद्वैपरीत्यात्। तस्मात्तमो द्रव्यान्तरमपि पृथिव्याद्यनुविधास्यति, तेजसश्च विनङ्क्ष्यति। तदपगमे च पृथिव्यादिभ्यः पुनः प्रभविष्यति चतुष्कादपवरकप्रविष्टस्य कतिपयाऽऽलोकाऽवयवसम्भेदविरलेऽपि तमसि सान्द्रताऽवगमो भ्रमः। इन्द्रियोपहतेः कालपरिवासवशात्। उपहतिविगमे तु यथावत्पश्यत्यपवरकवर्तिनः पदार्थान्, अल्पां च तत्र च्छायाम्।

---

१. धूममहिषी २ पु० पा०।
२. दैर्घ्यस्यो मु० पा०।
३. भ्रमणे २ पु० पा०।

आलोकाऽभावदर्शनं चेत्यसमानम् ।

सा च सान्द्रा पिधत्ते पदार्थान्, न तेजसा विरलीकृता । न चाऽऽलोकाभावमात्रं तम इति साम्प्रतम्, तस्य नीलत्वाऽनुपपत्तेरस्मृताऽनवलोकिताऽलोकस्य च तमःप्रत्ययाऽनुपपत्तिप्रसङ्गात् । तथा च परिस्पन्दादयस्तद्वर्तिनो ऽवगम्यमानाः कथंचित् क्लेशेन न व्याख्यामर्हन्ति । तस्मात्प्रत्यक्षसिद्धमसति बाधके द्रव्यान्तरमेकादशं तमो नवगुणं[1] चेति सिद्धम् ।

नादृष्टौ दर्शनं छाया नवाऽभावोऽस्मृतौ गतेः ।
रूपादुपायसद्भावाद् द्रव्यं द्रव्यान्तराऽनुगम् ।।
इति सङ्ग्रहश्लोकः ।

अलं वा नैयायिकैर्विवादेन । आलोकाऽभाव एव तमः । तथाऽपि सिद्धत्येव नः समीहितमित्याह—आलोकाऽभावदर्शनं चेति । तस्मादसमानं दार्ष्टान्तिकेनेति । तद्यदि प्रमाणग्राह्यता प्रमाणसंबन्धः, यदि वा तदर्हता, उभय्यप्यसावभावे सदाऽस्तीति तस्यापि सत्त्वप्रसङ्गः । अथ स्वरूपवर्तमानता[2], न साऽभावेऽस्ति । न । अतुच्छत्वोपपादनात् । न चैवमपि प्रतिभावं[3] भेदवती सत्सदिति बुद्धिव्यपदेशयोरभिन्नाऽर्थावगाहिनोर्गोचरो भवितुमर्हति । अभेदे वाऽभिधानान्तरेण सामान्यमेव तत् । पूर्वाऽभिमर्शमन्तरेण सामान्यमप्रामाणकमिति चेत् ? न । विकल्पाऽसहत्वात् । कः खल्वयं पूर्वाऽभिमर्शोऽभिमत आयुष्मतः, यावदुपलब्धरूपपरामर्शः, आहोस्वित् कतिपयानामपि रूपाणाम् ? तत्र प्रथमस्य न क्वचिदपि सम्भवः । न खलूपलब्धचरशिलाभ्रकस्या[4]पि वर्षासु शरदि पुनः पश्यतस्तादृशः पूर्वाऽवमर्शोऽस्ति । तस्याऽपि तदभावादन्यत्वप्रसङ्गः । कतिपयपरामर्शोऽत्रापि समानः । अस्ति खलु कतिपयानां रूपाणामनुगमस्त्रसरेणुकरेण्वोर्विविधभेदसमवायेऽपि वा द्रव्यत्वादिना । तस्माद्यथा सद्बुद्धिव्यपदेशयोरनन्यथासिद्धेर्गुणवत्त्वस्य च प्रतिगुणवद्भेदेन तदुपपादनाऽसामर्थ्यात् एवं द्रव्यगुणकर्मसामान्यानामपि अत्यन्तभिन्नानामपि सदित्यभिन्नबुद्धिव्यपदेशभाजामनुस्यूतमस्ति तत्सत्त्वम् । यस्य च त्रैकाल्याऽसम्वन्धादत्यन्ताऽसन्तः शशविषाणादयः, यस्य चाऽयोगव्यवच्छेदादत्यन्तसन्तः परमाण्वाकाशादयः, यस्य चात्यन्ताऽयोगव्यच्छेदात्कदाचिदेव सन्तः पटादयः, यस्य च सम्वन्धाद् द्रव्यगुणकर्मसामान्यानि स्वाऽभावव्यवच्छेदेन स्वाऽनुभवाद् भासन्ते, सामा-

---

१. अवगुणं २ पु० पा० ।
२. वर्तमानार्हता १ पु० पा० ।
३. प्रतिव्यक्ति २ पु० पा० ।
४. शिलाभेदस्य २ पु० पा० ।

